विहरतिचविमोहात्तेषुनानात्मबुद्ध्याश्रुतिविदितसतत्त्वंतत्परंब्रह्मवंदे ॥ १ ॥ प्रसि
श्रीगणेशायनमः ॥ ॥ सदभयनिजपूर्णानंदसंवित्प्रतिष्ठंयदिहनिजमहिम्नाविश्वरूपाणिबिभ्रत् ॥ ॥ २ ॥ उत्पत्तिप्रकरणेयतोवाइमानिभूतानिजायंतेइत्यादीनांसर्वेषांसृष्टिप्रतिपादकवाक्यानामद्वये
द्धचित्रवैधर्म्यंजगच्चित्रस्यवर्ण्यते ॥ सांख्यादिमतमुन्मृज्यसाध्यतेब्रह्ममात्रता ॥ २ ॥ इदानीं येनजातानिजीवंति येनद्यौःपृथि
ब्रह्मणिजगदध्यारोपप्रदर्शनद्वारातटस्थलक्षणतयातात्पर्यविश्रांतिप्रदर्शनमुखेनजगज्जीवादिभेदंनिरस्यप्रत्यग्ब्रह्मैकरस्यंव्युत्पादितम् ॥ भीषास्माद्वातःपवते एकोदाधारभुवनानि
वीदृढा एतस्यैवाक्षरस्यप्रशासनेगार्गिसूर्याचंद्रमसौविधृतौतिष्ठतः कोह्येवान्यात्कःप्राण्याद्यदेषआकाशआनंदोनस्यादेषह्येवानंदयाति सदेवसोम्येदमग्र
विश्वा यएकोजालवानीशतईशनीभिःपरमशक्तिभिः अनुज्ञाताह्ययमात्मास्यसर्वस्यस्वात्मानंदधातीत्यादिसांप्रतिकजगत्स्थितिनिर्वाहकताप्रतिपादकश्रुतीनां चपुरुषमतिवैचित्र्यप्रभवनानातात्पर्यौत्प्रेक्षणयुक्तभ्रांतिवैचित्र्यनिरासेनस
आसीत् आत्मावाइदमेकएवाग्रआसीदित्यादिप्रलयकालिकजगत्सत्तानिर्वाहकत्वप्रतिपादकश्रुतीनां

॥ श्रीगणेशायनमः ॥ ॥ अथोत्पत्तिप्रकरणादनंतरमिदंशृणु ॥ स्थितिप्रकरणंराम ज्ञातंनिर्वाणकारियत् ॥ १ ॥ एवंतावदिदंविद्धिदृश्यं
जगदितिस्थितम् ॥ अहंचेत्याद्यनाकारंभ्रांतिमात्रमसन्मयम् ॥ २ ॥ अकर्तृकमरंगंचगगनेचित्रमुत्थितम् ॥ अद्रष्टृकंचानुभवमनिद्रं
स्वप्नदर्शनम् ॥ ३ ॥ भविष्यत्पुरनिर्माणंचित्तसंस्थमिवोदितम् ॥ मर्कटानलतापांतमसदेवार्थसाधकम् ॥ ४ ॥ ब्रह्मण्यनन्यदन्याभमंब्वावर्त
वदास्थितम् ॥ संद्रूपमपिनिःशून्यंतेजःसौरमिवांबरे ॥ ५ ॥ रत्नाभापुंजमिवखेदृश्यमानमभित्तिमत् ॥ गंधर्वाणांपुरमिवदृश्यंनित्यमभि
त्तिमत् ॥ ६ ॥ मृगतृष्णांबुवदसत्यंसत्यवत्प्रत्ययप्रदम् ॥ संकल्पपुरवत्प्रौढमनुभूतमसन्मयम् ॥ ७ ॥ कथार्थप्रतिभानात्मनक्वचित्स्थित
मास्थितम् ॥ निःसारमप्यतीवांतःसारंस्वप्नाचलोपमम् ॥ ८ ॥

जगत्स्थितिप्रकरणमारभमाणोभगवान्वसिष्ठःसंगतिप्र
चिदानंदैकरसेब्रह्मणिसच्चिद्रूपतोपपादनेनतटस्थलक्षणतात्पर्यपर्यवसानप्रदर्शनमुखेनापिविस्तरोपपादितंब्रह्मैक्यज्ञानंस्थिरीकर्तुंस्थितिप्रकरणमारभमाणोभगवान्वसिष्ठःसंगतिप्र
दर्शयन्प्रतिजानीते ॥ अथेति ॥ उत्पत्तेःस्थितिहेतुत्वाद्धेतुतासंगतिरितिभावः ॥ एवमेककार्यत्वसंगतिरप्यस्तीत्याशयेनाह ॥ ज्ञातमिति ॥ आनंतर्याधिकारपरोप्यथशब्दःशंख
वीणामृदंगध्वनिवत्स्वरूपतोमंगलमेवेतिप्रकरणादौमंगलमप्याचरितंबोध्यम् ॥ १ ॥ जगदुत्पत्तौमिथ्यात्वप्रदर्शनायव्युत्पादितान्यायाःस्थितावपितुल्याइत्यतिदेशेनदर्शयति ॥
एवंतावदित्यादिना ॥ २ ॥ अकर्तृकंहेतुकरणोपकरणसंपन्नलेखकशून्यम् ॥ अरंगमुपादानरंजकद्रव्यशून्यम् ॥ गगनेइत्यनेनाधारभित्त्यादिशून्यतापिचित्रस्यदर्शिता ॥ द्रष्टुर
पिदृश्यांतःपातादद्रष्टृकम् ॥ मोहनिद्रयाप्रमातुरभिभवेपिसाक्षिणोनभिभवादनिद्रम् ॥ ३ ॥ मर्कटैःकल्पितोऽनलोगुंजागैरिकादिसंचयरूपस्तत्तापोंतोदृष्टांतोयस्य ॥ तेनापितेषां
शीतनिवृत्तिरितिप्रसिद्धेत्याशयेनोक्तमसदेवार्थसाधकमिति ॥ ४ ॥ सौरंतेजआलोकोनत्वातपः ॥ ५ ॥ अभित्तिमदनाधारम् ॥ ६ ॥ प्रौढंविस्तृतम् ॥ स्फुटमनुभूतमितिवा
॥ ७ ॥ कविकल्पितकथार्थनगरपर्वतादिसंस्थानप्रतिभानमिवात्मास्वरूपंयस्य ॥ क्वचिदपिदेशेकालेवानस्थितमितिहेतोरस्थितमसत् ॥ अंतःसारमतिदृढम् ॥ ८ ॥

१ तद्रूपमित्यपिपाठः २ दृश्यमानमित्यपिपाठः

अवाङ्मुखीकृतेंद्रनीलमहाकटाहाकारभासुरम् ॥ यावदपस्थंतावदलमातपनिरोधादिसमर्थम् ॥ क्षेतुमशक्यमक्षतमविच्छिन्नंच ॥ ९ ॥ व्योममलस्यकालिम्नोवर्णःस्निग्धता ॥ राहोःशिरइतिवद्वा ॥ व्योमतलस्येतिपाठेस्पष्टम् ॥ अर्थनिष्ठंभोगलक्षणार्थक्रियाकारि ॥१०॥ अरसंशुष्कंनिर्मकरंदंच ॥११॥ असत्यंस्वतः ॥ अवास्तवंफलतोपि ॥ सारोमक रंदपरागादिः ॥ १२ ॥ पिंडग्रहोमूर्त्ततातच्छून्यम् ॥१३॥ परस्यपरमात्मनआमर्शेनेपद्विचारेणापि परस्यान्यस्यवाप्यातपजनादेरामर्शेनेपदभिघातेनापिच ॥ कदलीस्तंभःकद लीतरुः ॥ १४ ॥ स्फुरितेक्षणेनाक्षिरोगविशेषेण ॥ अभवद्रूपमसंभवद्रूपम् ॥ १५ ॥ आभोगिकल्पिताकारम् ॥ रसआपातरमणीयतातदात्मकमप्यरसंपरिणामकटुकम् ॥

भूताकाशमिवाकारभासुरंशून्यमात्रकम्॥शरदभ्रमिवाग्रस्यमलमक्षयमक्षतम्॥९॥वर्णोव्योममलस्येवदृश्यमानमवस्तुकम्॥स्वप्नां गनारताकारमर्थनिष्ठमनर्थकम्॥१०॥ चित्रोद्यानमिवोत्फुल्लमरसंसरसाकृति॥ प्रकाशमपिनिस्तेजश्चित्रार्कानलवत्स्थितम्॥ ११ ॥ अनुभूतंमनोराज्यमिवासत्यमवास्तवम्॥ चित्रपद्माकरइवसारसौगंध्यवर्जितम्॥ १२॥ शून्येप्रकचितंनानावर्णमाकारितात्मकम्॥ अपिंडग्रहमाशून्यमिंद्रचापमिवोत्थितम्॥ १३॥ परामर्शेनशुष्यद्भिर्भूतपेलवपल्लवैः॥ कृतंजडमसारात्मकदलीस्तंभभासुरम्॥ १४॥ स्फुरितेक्षणदृष्टांधकारचक्रकवर्त्तनम्॥ अत्यंतमभवद्रूपमपिप्रत्यक्षवत्स्थितम् ॥ १५॥ वार्बुद्बुदमिवाभोगिशून्यमंतःस्फुरद्वपुः॥ रसा त्मकंचाप्यरसमविच्छिन्नक्षयोदयम्॥ १६॥ नीहारइवविस्तारिगृहीतंसन्नकिंचन॥जडशून्यास्पदंशून्यंकेषांचित्परमाणुवत्॥ १७॥ किंचिद्भूतमयोस्मीतिस्थितंशून्यमभूतकम्॥ गृह्यमाणोप्यसद्रूपोनिशाचरइवास्थितम्॥१८॥ ॥श्रीरामउवाच॥ ॥महाकल्पक्षये दृश्यमास्तेबीजइवांकुरः॥ परेभूयउदेत्येतत्तत्तएवेतिकिंवद॥१९॥ एवंबोधाःकिमज्ञाःस्युरुतज्ञाइतिचस्फुटम्॥ यथावद्भगवन्ब्रूहिसर्व संशयशांतये॥ २०॥ ॥श्रीवसिष्ठउवाच॥ ॥इदंबीजेंकुरइवदृश्यमास्तेमहाशये॥ब्रूतेयएवमज्ञत्वमेतत्तस्यास्तिशैशवम्॥ २१॥

तदेवप्रपंचयति ॥ अविच्छिन्नेति ॥ क्षयोदयाजन्ममरणानि ॥ १६ ॥ सांख्यानांकेवलजडात्मकं जडशून्यमविद्यातदास्पदंवेदांतिनां शून्यंमाध्यमिकानां क्षणिकत्वात्का लतःपरमाणुवद्योगाचार्याणां कालतोदेशतश्चपरमाणुवत्सौत्रांतिकवैभाषिकयोः देशतएवपरमाणुवत्कणादगौतमीययोः अनियतस्वभावपरमाणुवदार्हतानामितिवादिभिर्बहु धाविकल्पितमित्यर्थः ॥ १७ ॥ बाह्येजगत्युक्तन्यायमाध्यात्मिकेपिदर्शयन्नाह ॥ किंचिदिति ॥ १८ ॥ नन्वेवंजगत्स्वतःसत्ताशून्यंब्रह्मसत्ताचजगन्नस्पृशतितदासदेवसोम्ये दमग्रआसीदित्यादीनांसत्कार्यवादिश्रुतीनां [illegible] मन्यमानोरामः पृच्छति ॥ महाकल्पेति ॥ इतियद्व्यासादिभिरुक्तंतत्कि

[illegible]व्यः किंतत्सत्तासामान्येनास्ति उतवीजादिसत्तया उतांकुरादिसत्तया ॥ आद्यतदंकुरादि[illegible]
एतद्वक्ष्यमाणयुक्तिजातंशृणु ॥ कारणेप्रागुत्पत्तःकार्यमस्त ॥ अस्त्विष्टापत्तिरितिचेत् एतदंकुरादिक्षेत्रेअंकुरितवीजेदृष्टमेववास्त
असंबंधोयस्यतथाविधम् ॥ सामान्यसत्तायाःसर्ववस्तुसाधारण्याज्जायमानांकुरादेःसर्वत्रसंबंधप्रसंगइत्यर्थः ॥ विशेषानिरूपणान्नविद्यतेसंबंधो
वं कुसूलस्थवीजेशिलाशकलेवाभ्रांतिदृष्टमवास्तवमित्येतत्कथमित्यर्थः ॥ द्वितीयेपिवीजसत्तायाअंकुरसंबंधस्यघटपटादिसंबंधस्यचस्वरूपतोविशेषानिरूपणान्नविद्यतेसंबंधो
यस्यतदसंबंधंकिंवस्तुयद्वीजेनस्यादिति ॥ व्रीह्यादिवीजेसर्वजगत्सत्वप्रसंगः ॥ इष्टापत्तावंकुरितवीजेंकुराद्येववास्तवंनघटपटादीत्येतत्कथमित्यर्थः ॥ तृतीयेप्यंकुरस्वरूपसत्तया किंचसाधा
वीजसंबंधस्यघटादिसंबंधस्यचविशेषानिरूपणादसंबंधंकिंवस्तु ॥ सर्वत्रांकुरसद्भावप्रसंगइत्यर्थः ॥ इष्टापत्तौवीजादावेवांकुरादिवास्तवंनान्यत्रेत्येतत्कथमित्यर्थः ॥ विपरीतइति ॥ २२ ॥
रणसत्तयाअसाधारणमंकुराद्यस्तिकारणसत्तयाकार्यमस्तिकार्यसत्तयाचकारणमस्तीतिपक्षत्रयेप्युक्तिसंभवाघटनाद्विपरीतएवायंबोधइत्याशयेनाह ॥

शृण्वेतत्किमसंबंधंकथमेतदवास्तवम् ॥ विपरीतोबोधएपवक्तुःश्रोतुश्चमोहकृत् ॥ २२ ॥ वीजेकिलांकुरइवजगदास्तइतीहया ॥ बुद्धिःसा
सत्प्रलापार्थमूढाशृणुकथंकिल ॥ २३ ॥ वीजंभवेत्स्वयंदृश्यंचित्तादींद्रियगोचरम् ॥ यवधानादिधान्यानियुक्तःपत्रांकुरोद्भवः ॥ २४ ॥ स
नःपष्ठेंद्रियातीतंयत्स्यादतितरामणु ॥ वीजंतद्भवितुंशक्तंस्वयंभूर्जगतांकथम् ॥ २५ ॥ आकाशादपिसूक्ष्मस्यपरस्यपरमात्मनः ॥ सर्वाख्या
नुपलंभस्यकीदृशीवीजताकथम् ॥ २६ ॥ तत्सूक्ष्ममसदाभासमसदेवाद्यतादृशम् ॥ कीदृशीवीजतातत्रवीजाभावेकुतोंकुरः ॥ २७ ॥ गग
नांगादपिस्वच्छेशून्येतत्रपरेपदे ॥ कथंसंतिजगन्मेरुसमुद्रगगनादयः ॥ २८ ॥ नकिंचिद्यत्कथंकिंचित्तत्रास्तेवस्तुवस्तुनि ॥ अस्तिचेत्त
त्कथंतत्रविद्यमानंनदृश्यते ॥ २९ ॥ नकिंचिदात्मनःकिंचित्कथमेतिकुतोथवा ॥ शून्यरूपाद्व्टाकाशाज्जातोद्रिःक्वकुतःकदा ॥ ३० ॥

सत्प्रलापार्थंप्रलयेजगत्सत्वेदृष्टांतोपन्या
किंचवीजेंकुरइवप्रलयेजगदस्तीतिदृष्टांतोविषमः कूटस्थचिदेकरसस्यात्मनोवीजत्वस्यैवासंभवादित्याशयेनाह ॥ वीजइत्यादिना ॥ तथाचतत्रांकुरा
सार्थंयाबुद्धिःसामूढाभ्रांतिः ॥ दार्ष्टांतिकवैषम्यादित्यर्थः ॥ २३ ॥ वैषम्यमेवस्फुटयति ॥ वीजमित्यादिना ॥ यवधानाःसतुषयवास्तदादिर्वीजंदृश्यंदर्शनार्हम् ॥ तथाचतत्रांकुरा
द्यन्वयव्यतिरेकस्यप्रत्यक्षसिद्धत्वात्सावयवत्वात्परिणामिस्वभावत्वादंकुरवैजात्यभेदनिर्वाहकजातिसंस्थानादिभेदवत्वाच्चयुक्तोंकुरादिवीजभावइत्यर्थः ॥ २४ ॥ दार्ष्टांतिकेतुन
तथेत्याह ॥ मनइति ॥ स्वयमेवभवतिस्वयंभवत्येवेतिचस्वयंभूःकूटस्थाद्वितीयचिदात्मा ॥ तथाचयस्यवीजत्वमेवदुर्घटंदूरेतत्रजगतःस्वसत्तयास्थितिरितिभावः ॥ २५ ॥ २६ ॥
एवंतत्त्वज्ञदृशावीजत्वासंभवमुक्त्वाअज्ञदृशापितस्यतदसंभवमाह ॥ तदिति ॥ वस्तुतःअतादृशंसदेकरसमपिसूक्ष्मत्वादज्ञदृशाअसदाभासमित्यसदेवेत्यर्थः ॥ अंकुरोजगदंकुरः
॥ २७ ॥ २८ ॥ २९ ॥ नकिंचिदात्मनःअथातआदेशोनेतिनेतीतिसर्वनिषेधात्मनः ॥ ३० ॥

१ युक्तस्तत्रांकुरोद्भवइत्यपिपाठः

२ शक्यमित्यपिपाठः

चिदकरससत्तायाजडानेकरससत्ताप्रतिपक्षत्वादपितत्रनजगत्सत्तासंभावितेत्याह ॥ प्रतिपक्षेइति ॥ ३१ ॥ ननुमास्तुभेदेनसत्तदैक्येनतुस्यात्तत्राप्याह ॥ तदतद्रूपयोरिति ॥ चिदचिद्रूपयोरित्यर्थः ॥ ३२ ॥ नाकारेअनाकारे ॥ नायंनञ्किंतुनशब्दोन्यःप्रतिषेधार्थःसमस्यते ॥ ३३ ॥ किंचायंसांख्यादिभिःकल्पितःकारणेजगत्सद्भावःसकिंलौकिकप्रमाणबलादुतसदेवसोम्येदमग्रआसीदित्यादिश्रुतिबलात् नाद्यइत्याह ॥ देशांतरेइति ॥ यद्बुद्ध्यादिसर्वेंद्रियशक्तिदृश्यंघटपटादितदधिकरणदेशाद्देशांतरेतदधिकरणकालात्कालांतरेचसाक्षात्स्वयंद्रष्टरिनरांतरेवाद्रष्टरिसत्यसनिचतत्तद्विधप्रत्यक्षानुमानादिबुद्धिवृत्तिलक्षणेबोधेनास्त्येवनभात्येवतद्दृश्यादर्शनादियोग्यानुपलब्धिवशान्नकिंचिदसदेवेतिसर्वैप्रामाणिकैरुच्यते ॥ अतःसर्वलौकिकानुपलंभविरुद्धंप्रलयेजगत्सद्भावकल्पनमित्यर्थः ॥ ३४ ॥ नद्वितीयोपीत्याह ॥ कार्यस्येति ॥ सदेवसोम्येदमग्रआसीदितुकार्यंकारणयोर्द्वैसत्तेप्रतीयेते ॥ एकमेवाद्वितीयमितिवाक्यशेषविरोधात् ॥ तत्रैतद्विमृश्यताम् किंकार्यमेवसत्तत्कार्यसत्यमेवकारणतांप्रयातंकारणेआरोपितंश्रुति

कथंकिंचिदास्तेच्छायातपेयथा ॥ कथमास्तेतमोभानौकथमास्तेहिमोऽनले ॥ ३१ ॥ मेरुरास्तेकथमणौकुतःकिंचिदनाकृतौ ॥ ...रैक्यंकच्छायातपयोरिव ॥ ३२ ॥ साकारवटधानादावंकुराःसंतियुक्तिमत् ॥ नाकारेतन्महाकारंजगदस्तीत्ययुक्तिकम् ॥ ३३ ॥ यच्चनरांतरेचबुद्ध्यादिसर्वेंद्रियशक्तिदृश्यम् ॥ नास्त्येवतत्तद्विधबुद्धिबोधेनकिंचिदित्येवतदुच्यतेच ॥ ३४ ॥ कार्यस्यतत्कारणतांप्रवक्तीतियस्तस्यविमूढबोधः ॥ कैर्नामतत्कार्यमुदेतितस्मात्स्वैःकारणाद्यैःसहकारिरूपैः ॥ ३५ ॥ दुर्बुद्धिभिःकारणकार्यभावंसंकल्पिरेव्युदस्य ॥ तदेवतत्सत्यमनादिमध्यंजगत्तदेतत्स्थितमित्यवेहि ॥ ३६ ॥ ॥ इत्यार्षेवासिष्ठमहारामायणेवाल्मीकीयेदेवदूतोक्तेक्षोपायेषुस्थितिप्रकरणेजन्यजनिनिराकरणंनामप्रथमःसर्गः ॥ १ ॥ ॥ ७ ॥

र्वक्तीतिवाकारणमेवसत्तत्सत्त्वमेवकार्येआरोपितमितिश्रुतिर्वक्तीतिवा ॥ अथवासदेवसन्तत्सत्त्वैवकार्यकारणयोरारोपितेति ॥ तत्रतस्यसांख्यस्यबोधःसआद्यपक्षानुसारीचेत्सविमूढबोधोभ्रमएव ॥ वाचारंभणंविकारोनामधेयमित्यादिकार्यानृतत्वपरश्रुत्यननुगुणत्वात्कारणानृतत्वापादकत्वेनस्वसिद्धांतबाधकत्वाच्चेत्याशयेनाह ॥ कैर्नामेति ॥ कारगानांगुणानामेवानृतत्वेतन्महदादिकार्यंकैःकारणैरुदेत्युत्पद्यतेनाम ॥ कारणेअसतिकार्यस्योत्पत्तुमेवाशक्तेरित्यर्थः ॥ अतएवनद्वितीयोपि ॥ कार्येअसतितत्तत्कारणतायाअनेतद्द्वितायानिरूपयितुमशक्तेरितिपरिशेषात्तृतीयकल्पएवश्रुत्यभिप्रेतोयुक्तश्चपरिणामःसदित्याह ॥ तस्मादित्याद्युत्तरश्लोकेन ॥ ३५ ॥ तस्मात्कार्यकारणभेदसत्यतायाःश्रुत्यसंगतत्वाद्दुर्बुद्धिभिःसांख्यादिभिःसंकल्पितंकारणकार्यभावमुपादानोपादेयभावंस्वैःस्वीयैःसहकारिरूपैःकारणाद्यैर्निमित्तप्रयोजनादिभेदैःसह ... स्वमिथ्येतिनिरस्यमेवाद्यमनादिमध्यांतं ... तदेवा ...

तर्कैःस्वरूपभेदेननिरस्यजगतःस्थितिम् ॥ पूर्णानंदात्मसन्मात्रस्थितिःशिष्टात्रवण्यत ॥ १ ॥ एतस्यजगतःप्रलयेपृथक्सत्वाभ्युपगमेत्रचेमदोषोनातिरोपि नचकूटस्थमुत्पत्त्यादिभि
त्तर्हिसर्गएवनसिद्ध्येत उत्पत्तिक्रियाहिकर्तृसाध्या नह्यसतिकर्त्तरिसिद्ध्यति नचोत्पद्यमानादन्यत्कर्त्रस्ति ब्रह्मैवसत्वात्तत्कर्तृचेत्तदेवोत्पद्येतनजगत् नचकूटस्थमुत्पत्त्यादिभि
विंकारैर्युज्यते तस्मादुत्पत्तिसिद्ध्येप्रलयेजगतोऽपिसत्ताभ्युपेयेत्याशंकामनूद्यनिरस्यति ॥ समस्तेत्यादिना ॥ १ ॥ भवेत्कर्तृसत्ताकल्पनंयदिकर्तृमात्रादुत्पत्तिक्रियासिद्ध्येत्
साहिकर्त्तारमिवस्वसिद्ध्येकरणोपकरणाधिकरणादीनिकारकांतराण्यपिसहकारीण्यपेक्षतेतदभावात्सत्त्वेनकल्पितमपिजगन्नोत्पत्तुंशक्नोतीत्याशयेनाह ॥ जगदादीति ॥ आ
दिपदंवैचित्र्यप्रपंचार्थम् ॥ इवकारस्त्वत्यंतासंभावितत्वद्योतनार्थः ॥ २ ॥ ३ ॥ तस्माद्रज्जुसर्पादिवत्सहकारिकारणानामभावेऽपिअवोदितमाविर्भूतंयद्यभ्युपगच्छसितर्हिमूलका
रणमेवभ्रांतिकृतजगत्स्वभावस्थितिंगतंनवस्तुतोजगत्सर्गोऽस्तीतिव्यर्थातस्यप्रलयेसत्त्वकल्पनेत्यर्थः ॥ ४ ॥ तदेवस्पष्टमाह ॥ सर्गादाविति ॥ ५ ॥ ननुप्रलयेसर्वजगत्सत्त्वस्वी

श्रीवसिष्ठउवाच॥ ॥अथैतदभ्युपगमेवच्मिवेद्यविदांवर॥समस्तकलनातीतेमहाचिद्व्योम्निनिर्मले॥१॥जगदाद्यंकुरस्तत्रयद्यस्तितद
सौतदा॥कैरिवोदेतिकथयकारणैःसहकारिभिः॥२॥सहकारिकारणानामभावेत्वंकुरोद्गतिः॥वंध्याकन्येवदृष्टेहनकदाचनकेनचित्॥३॥
सहकारिकारणानामभावेयद्यवोदितम् ॥ मूलकारणमेवांगतत्स्वभावस्थितिंगतम् ॥ ४ ॥ सर्गादौसर्गरूपेणब्रह्मैवात्मनितिष्ठति ॥
यथास्थितमनाकारंकजन्यजनकक्रमः॥ ५॥ अथपृथ्व्यादयोन्येवाकेचिदत्रोपकुर्वते॥ सहकारिकारणत्वंतत्पूर्वंचात्रदूषणम्॥ ६ ॥
तस्मात्पदेजगद्भ्रांतमास्तेतत्सहकारिभिः॥ चित्तात्प्रसरतीत्युक्तिर्बालस्यनविपश्चितः॥ ७॥ तस्माद्रामजगन्नासीन्नचास्तिनभविष्य
ति॥ चेतनाकाशमेवाशुकचतीत्थमिवात्मनि ॥ ८ ॥ अत्यंताभावएवास्यजगतोविद्यतेयदा॥तदाब्रह्मेदमखिलमितितद्रामनान्यथा
॥ ९ ॥ पूर्वंप्रध्वंसनान्योन्याभावैर्यदुपशाम्यति ॥ नशाम्यत्येवतच्चित्तेशाम्यत्येवतुदृश्यते॥ १० ॥

नहिस्वयमेवानुत्पन्नमन्य
कारान्नसहकारिदौर्लभ्यं तदंतर्गतैःपृथ्व्यादिभिःपरस्परमुपकर्तुंशक्यत्वादित्याशंक्यपरिहरति ॥ अथेति ॥ तत्पूर्वंपृथ्व्याद्युत्पत्तिपूर्वकंवाच्यम् ॥ नहिस्वयमेवानुत्पन्नमन्य
स्योत्पत्तौसहकारिभवितुंशक्नोति ॥ तथाचोत्पत्तिसिद्धौसहकारित्वसिद्धिस्तत्सिद्धावुत्पत्तिसिद्धिरित्यन्योन्याश्रयोत्रदूषणमित्यर्थः ॥ ६ ॥ इत्थंचसांख्यादिकल्पनाबालिशक
ल्पनैवेत्युपसंहरति ॥ तस्मादिति ॥ पदेसप्रकृतौशांतंप्रलयेतिरोहितम् ॥७॥ परमतेनिरस्तेपरिशिष्टंस्वसिद्धांतंदर्शयति ॥ तस्मादिति ॥८॥ ब्रह्मैवेदममृतंपुरस्तादित्यादिश्रुतीनामपि
बाधायांसामानाधिकरण्यादत्रैवतात्पर्यमित्याशयेनाह ॥ अत्यंताभावइति ॥ तत्प्रसिद्धंश्रुतितात्पर्यम् ॥ ९ ॥ एवंचश्रौतबाधात्पूर्वंजागतंघटपटादिमुद्गरप्रहारादिनाप्रध्वंसैर्व
स्त्वंतरात्मनान्योन्याभावैश्चयदुपशाम्यतिइदमिदानींनास्तिइदंनभवतीतिगृह्यमाणमभावरूपउपशमंभजतेइतियत्तन्नशाम्यत्येवनाशावुपशमःकिंतुतिरोधानेनतस्यचक्षुरादिदृ
श्यतायाएवोपरमः ॥ यतश्चित्तेवासनात्मनानशाम्यत्येवेत्यर्थः ॥ अयंन्यायःप्रागभावात्यंताभावयोरपियोज्यः ॥ स्वसत्तयाब्रह्मसत्तयावासतोघटादेर्बाधमंतरेणक्वाप्यसत्त्वा
योगान्मृत्पिंडभूतलादावदर्शनस्यतिरोधानेनाप्युपपत्तेरिति ॥ १० ॥

चिदेकरससत्तायाजडानेकरससत्ताप्रतिपक्षत्वादपितत्रनजगत्सत्तासंभावितेत्याह ॥ प्रतिपक्षेइति ॥ ३१ ॥ ननुमास्तुभेदेनसत्तैक्येनतुस्यात्तत्राप्याह ॥ तदतद्रूपयोरिति ॥ चिदचिद्रूपयोरित्यर्थ ॥ ३२ ॥ नाकारेअनाकारे ॥ नायनञ्किंतुनशब्दोन्य प्रतिषेधार्थ समस्यते ॥ ३३ ॥ किंचायसांख्यादिभि कल्पित कारणेजगत्सद्भाव सकिंलौकिकप्रमाणबलादुतसदेवसोम्येदमग्रआसीदित्यादिश्रुतिबलात् नाद्यइत्याह ॥ देशांतरेइति ॥ यद्बुद्ध्यादिसर्वेंद्रियशक्तिदृश्यघटपटादितदधिकरणदेशाद्देशांतरेतदधिकरणकालात्कालांतरेचसाक्षात्स्वयद्रष्टरिनरांतरेवाद्रष्टरिसत्यसन्निचतत्तद्विधप्रत्यक्षानुमानादिबुद्धिवृत्तिलक्षणेबोधेनास्त्येवनभात्येवतद्दृश्यादर्शनादियोग्यानुपलब्धिवशान्नकिंचिदसदेवेतिसर्वैर्लौकिकप्रामाणिकेरुच्यते ॥ अत सर्वलौकिकानुपलंभविरुद्धप्रलयेजगत्सद्भावकल्पनमित्यर्थ ॥ ३४ ॥ नद्वितीयोपीत्याह ॥ कार्यस्येति ॥ सदेवसोम्येदमग्रआसीदित्यादिश्रुतिपुनकार्यकारणयोर्द्वैमत्तेप्रतीयेते ॥ एकमेवाद्वितीयमितिवाक्यशेषविरोधात् ॥ तन्नैतद्विमृश्यताम् किंकार्यमेवसन्तत्कार्यसत्वमेवकारणताप्रयातकारणेआरोपितश्रुति

प्रतिपक्षेकथंकिंचिदास्तेच्छायातपेयथा ॥ कथमास्तेतमोभानौकथमास्तेहिमोऽनले ॥ ३१ ॥ मेरुरास्तेकथमणौकुतःकिंचिदनाकृतौ ॥ तदतद्रूपयोरैक्यंकच्छायातपयोरिव ॥ ३२ ॥ साकारवटधानादावंकुराःसंतियुक्तिमत् ॥ नाकारेतन्महाकारंजगदस्तीत्ययुक्तिकम् ॥ ३३ ॥ देशांतरेयच्चनरांतरेचबुद्ध्यादिसर्वेंद्रियशक्तिदृश्यम् ॥ नास्त्येवतत्तद्विधबुद्धिबोधेनकिंचिदित्येवतदुच्यतेच ॥ ३४ ॥ कार्यस्यतत्कारणतांप्रयातंवक्तीतियस्तस्यविमूढबोधः ॥ कैर्नामतत्कार्यमुदेतितस्मात्स्वैःकारणाद्यैःसहकारिरूपैः ॥ ३५ ॥ दुर्बुद्धिभिःकारणकार्यभावंसंकल्पितंदूरतरेव्युदस्य ॥ तदेवतत्सत्यमनादिमध्यंजगत्तदेतत्स्थितमित्यवेहि ॥ ३६ ॥ ॥ इत्यार्षेवासिष्ठमहारामायणेवाल्मीकीयेदेवदूतोक्तेमोक्षोपायेषुस्थितिप्रकरणेजन्यजनिनिराकरणंनामप्रथमःसर्गः ॥ १ ॥ ॥ ७ ॥

वक्तीतिवाकारणमेवसत्तत्सत्वमेवकार्येआरोपितमितिश्रुतिर्वक्तीतिवा ॥ अथवासदेवसन्तत्सत्त्वेवकार्यकारणयोरारोपितेति ॥ तन्नतस्यसांख्यस्यबोध सआद्यपक्षानुसारीचेत्सविमूढबोधोभ्रमएव ॥ वाचारंभणविकारोनामधेयमित्यादिकार्यानृतत्वपरश्रुत्यननुगुणत्वात्कारणानृतत्वापादकत्वेनस्वसिद्धांतबाधकत्वाच्चेत्याशयेनाह ॥ कैर्नामेति ॥ कारणानागुणानामेवानृतत्वेतन्महदादिकार्यंकैः कारणैरुदेत्युत्पद्यतेनाम ॥ कारणेअसतिकार्यस्योत्पत्तुमेवाशक्तेरित्यर्थ ॥ अतएवनद्वितीयोपि ॥ कार्येअसतितत्तत्कारणतायाअपितद्घटितायानिरूपयितुमशक्तेरितिपरिशेषात्तृतीयकल्पएवश्रुत्यभिप्रेतोयुक्तश्चपरिशेषाद्इत्याह ॥ तस्मादित्याद्युत्तरश्लोकेन ॥ ३५ ॥ तस्मात्कार्यकारणभेदसत्यतायाः श्रुत्यसंमतत्वा दुर्बुद्धिभि सांख्यादिभि संकल्पितकारणकार्यभावमुपादानोपादेयभावस्वे स्वीयैः सहकारिरूपैः कारणादिभिर्निमित्तप्रयोजनादिभेदैः सह दूरतरस्मि...

तर्कैःस्वरूपभेदेननिरस्यजगतःस्थितिम् ॥ पूर्णानंदात्मसन्मात्रास्यातेःशिष्टात्रवर्ण्यते ॥ १ ॥ एतस्यजगतःप्रलयपूर्वपत्त्वा ... नचकूटस्थमुत्पत्त्यादिभि
त्तर्हिसर्गएवनसिद्ध्येत उत्पत्तिक्रियाहिकर्तृसाध्या नह्यसतिकर्त्तरिसिद्ध्यति नचोत्पद्यमानादन्यत्कर्त्रस्ति ब्रह्मैवसत्वात्तत्कर्तृचेत्तदेवोत्पद्येतनजगत् नचकूटस्थमुत्पत्त्यादिभि
विकारैर्युज्यते तस्मादुत्पत्तिसिद्ध्येप्रलयेजगतोऽपिसत्ताभ्युपेयेत्याशंकामनूद्यनिरस्यति ॥ समस्तेत्यादिना ॥ १ ॥ भवेत्कर्तृसत्ताकल्पनंयदिकर्तृमात्रादुत्पत्तिक्रियासिद्ध्येत् ॥ जगदादीति ॥ आ
साहिकर्त्तारमिवस्वसिद्ध्येकरणोपकरणाधिकरणादीनिकारकांतराण्यपिसहकारीण्यपेक्षतेतदभावात्सत्त्वेनकल्पितमपिजगन्नोत्पत्तुंशक्नोतीत्याशयेनाह ॥ जगदादीति ॥ आविर्भूतंयद्यभ्युपगच्छसितर्हिमूलका
दिपदंवैचित्र्यप्रपंचार्थम् ॥ इवकारस्त्वत्यंतासंभावितत्वद्योतनार्थः ॥ २ ॥ ३ ॥ तस्माद्रज्जुसर्पादिवत्सहकारिकारणानामभावेऽपिअवोदितमाविर्भूतंयद्यभ्युपगच्छसितर्हिमूलका
रणमेवभ्रांतिकृतजगत्स्वभावस्थितिंगतंनवस्तुतोजगत्सर्गोऽस्तीतिव्यर्थातस्यप्रलयेसत्त्वकल्पनेत्यर्थः ॥ ४ ॥ तदेवस्पष्टमाह ॥ सर्गादाविति ॥ ५ ॥ ननुप्रलयेसर्वजगत्सत्त्वस्वी

श्रीवसिष्ठउवाच॥ ॥अथैतदभ्युपगमेवच्मिवेद्यविदांवर॥ समस्तकलनातीतेमहाचिद्व्योम्निनिर्मले॥१॥ जगदाद्यंकुरस्तत्रयद्यस्तितद
सौतदा॥कैरिवोदेतिकथयकारणैःसहकारिभिः॥२॥सहकारिकारणानामभावेत्वंकुरोद्गतिः॥वंध्याकन्येवदृष्टेहनकदाचनकेनचित्॥३॥
सहकारिकारणानामभावेयद्यवोदितम् ॥ मूलकारणमेवांगतत्स्वभावस्थितिंगतम् ॥ ४ ॥ सर्गादौसर्गरूपेणब्रह्मैवात्मनितिष्ठति ॥
यथास्थितमनाकारंकजन्यजनकक्रमः॥ ५॥ अथपृथ्व्यादयोन्येवाकेचिदत्रोपकुर्वते॥ सहकारिकारणत्वंतत्पूर्वंचात्रदूषणम्॥ ६ ॥
तस्मात्पदेजगद्भ्रांतमास्तेतत्सहकारिभिः॥ चित्ताप्रसरतीत्युक्तिर्बालस्यनविपश्चितः॥ ७॥ तस्माद्रामजगन्नासीन्नचास्तिनभविष्य
ति॥ चेतनाकाशमेवाशुकचतीत्थमिवात्मनि ॥ ८ ॥ अत्यंताभावएवास्यजगतोविद्यतेयदा॥ तदाब्रह्मेदमखिलमितितद्रामनान्यथा
॥ ९ ॥ पूर्वप्रध्वंसनान्योन्याभावैर्यदुपशाम्यति ॥ नशाम्यत्येवतच्चित्तेशाम्यत्येवतुदृश्यते॥ १० ॥

कारान्नसहकारिदौर्लभ्यं तदंतर्गतैःपृथ्व्यादिभिःपरस्परमुपकर्त्तुंशक्यत्वादित्याशंक्यपरिहरति ॥ अथेति ॥ तत्पूर्वंपृथ्व्याद्युत्पत्तिपूर्वकंवाच्यम् ॥ नहिस्वयमेवानुत्पन्नमन्य
स्योत्पत्तौसहकारिभवितुंशक्नोति ॥ तथाचोत्पत्तिसिद्धौसहकारित्वसिद्धिस्तत्सिद्धावुत्पत्तिसिद्धिरित्यन्योन्याश्रयोत्रदूषणमित्यर्थः ॥ ६ ॥ इत्थंचसांख्यादिकल्पनाबालिशक
ल्पनैवेत्युपसंहरति ॥ तस्मादिति ॥ पदेसप्रकृतौशांतंप्रलयेतिरोहितम् ॥७॥ परमतेनिरस्तेपरिशिष्टंस्वसिद्धांतंदर्शयति ॥ तस्मादिति ॥८॥ ब्रह्मैवेदममृतंपुरस्तादित्यादिश्रुतीनामपि
बाधायांसामानाधिकरण्यादत्रैवतात्पर्यमित्याशयेनाह ॥ अत्यंताभावइति ॥ तत्प्रसिद्धंश्रुतितात्पर्यम् ॥ ९ ॥ एवंचश्रौतबाधात्पूर्वंजागतंघटपटादिमुद्गरप्रहारादिनाप्रध्वंसैर्व
स्वांतरात्मनान्योन्याभावैश्चयदुपशाम्यतिइदमिदानींनास्तिइदंनभवतीतिगृह्यमाणमभावरूपउपशमंभजतेइतियत्तन्नशाम्यत्येवनासावुपशमःकिंतुतिरोधानेनतस्यचक्षुरादिदृ
श्यतायाएवोपरमः ॥ यतश्चित्तेवासनात्मनानशाम्यत्येवेत्यर्थः ॥ अयंन्यायःप्रागभावात्यंताभावयोरपियोज्यः ॥ स्वसत्तयाब्रह्मसत्तयावासतोघटादेर्वाधमंतरेणक्वाप्यसत्त्वा
योगान्मृत्पिंडभूतलादावदर्शनस्यतिरोधानेनाप्युपपत्तेरिति ॥ १० ॥

यत्यदिदृश्यंभावैःकामकर्मवासनादिबीजैःसहउपशाम्यतितदाऽस्यदृश्यस्यात्यंताभावआत्यंतिकोच्छेदएवभवेत् ॥ चित्तेतुसतिकामादिभावानांदुर्वारत्वान्नशाम्यत्येव ॥ अतो दृश्यताविनाज्ञानंकशाम्यति ॥ तदुपशमोदुर्लभएवेत्यर्थः ॥ ११ ॥ अतएवसमूलमनोनाशांतश्रौतबाधातिरिक्तःसर्वदृश्यानर्थसंक्षयरूपेमोक्षेउपायोनास्तीत्याह ॥ अत्यंतेति ॥ अत्यंताभावोधिष्ठानदर्शनेनबाधएवात्रयुक्तिः ॥ इमांयुक्तिवर्जयित्वा ॥ १२ ॥ यत्यदाजगत्तत्त्वसाक्षात्कारवशाच्चिदाकाशस्यबोधः ॥ राहोःशिरइतिवत्षष्ठी ॥ बोधैकरस श्चिदाकाशएवनाणुमात्रमप्यचिद्रूपमस्तीतिस्थितंपरिनिष्ठितंज्ञानंभवतितदाअयदेवदत्तादिनामादेहःसविशिष्टमातापितृजन्यःप्रत्यभिज्ञायमानएवाहं इदंपरकीयदेहकुड्यादि नाहमितिलोकेप्रसिद्धःपामरव्यवहारश्चित्रकथायथातथाभाति ॥ भित्तिलिखितचित्रस्यसर्वस्यपरमार्थतोभित्तिमात्रत्वेपिचित्रप्रासादभित्तौइयंभित्तिरितिभवतिचित्रमनुष्य

अत्यंताभावएवास्यभावैर्यदुपशाम्यति ॥ नशाम्यत्येवसच्चित्तेकशाम्यत्येवदृश्यता ॥ ११ ॥ अत्यंताभावएवातोजगदृश्यस्यसर्वथा ॥ वर्जयित्वेतरायुक्तिर्नास्त्येवानर्थसंक्षये ॥ १२ ॥ चिदाकाशस्यबोधोयंजगद्भातीतियत्स्थितम् ॥ अयंसोहमिदंनाहंलोकेचित्रकथाय था ॥ १३ ॥ इदमन्ध्यादिपृथ्व्यादितथेदंवत्सरादि च ॥ अयंकल्पःक्षणश्चायमिमेमरणजन्मनी ॥ १४ ॥ अयंकल्पांतसंरंभोमहाकल्पांतए षः ॥ अयंससर्गप्रारंभोभाव्यभावक्रमस्त्वसौ ॥ १५ ॥ लक्ष्माणीमानिकल्पानामिमाब्रह्मांडकोटयः ॥ एतेचेमेपरिगताइमेभूयउपाग ताः ॥ १६ ॥ इमानिधिष्ण्यजालानिदेशकालकलाइमाः ॥ महाचित्परमाकाशमनावृतमनंतकम् ॥ १७ ॥ यथापूर्वंस्थितंशांतमित्येवं कचतिस्वयम् ॥ परमाणुसहस्रांशुभासएतामहाचितेः ॥ १८ ॥ स्वयमंतश्चमत्कारोयःसमुदीर्यतेचिता ॥ तत्सर्गभानंभातीदमरूपंनतुभि त्तिमत् ॥ १९ ॥ नोद्यंतिनचनश्यंतिनायांतिनचयांतिच ॥ महाशिलासुलेखानांसन्निवेशाइवाचलाः ॥ २० ॥

गजादिनेयंभित्तिरितितद्वदित्यर्थः ॥ १३ ॥ चित्रकथान्यायमेवपृथ्व्यादिष्वपिप्रपंचयति ॥ इदमित्यादिना ॥ १४ ॥ एषदृश्यमानःसश्रुतिपुराणप्रसिद्धोभाव्यानांस्रज्यानामाका शादीनांभावक्रमःसृष्टिक्रमः ॥ १५ ॥ लक्ष्माणिलक्षणानि ॥ परिगताअतीताःसर्गाः ॥ १६ ॥ धिष्ण्यजालानिचतुर्दशधाभिन्नादेवमनुष्यादिस्थानभेदाः ॥ देशानांसप्तद्वीपानां कालानांकृतत्रेताद्वापरादीनांकला.कल्पनाः ॥ १७ ॥ इत्येवंवर्णितेनचित्रकथान्यायेनमहाचित्परमाकाशमेवस्वयंस्वात्मनिकचतिस्फुरतिनान्यदित्यर्थः ॥ तर्हिकिंमहाचित्प्र काशएतावानेवनेत्याह ॥ परमाण्विति ॥ यथागवाक्षच्छिद्रांतर्गतपरमाणुपुसहस्रांशोर्भासःप्रभाःपरिच्छिन्नास्तथामनोनिर्गतब्रह्मांडकोटिपुपरिच्छिन्नाएताश्चिद्भासः ॥ यथा चनभोविस्तृतेनसूर्यप्रकाशेनपरमाणुभेदभ्रमणादिदृश्यतेतथामहाचित्परमाकाशेपीतिभावः ॥ १८ ॥ तथाचमनःपरिच्छेदपीडिताच्चित्स्वांतर्गतंजगदद्मतीवेत्युत्प्रेक्षमाणआह ॥

नभसीवेत्यादयःपृथक्सत्ताशून्यत्वदृष्टांताः ॥ २१ ॥ २२ ॥ सोदयास्तमयारंभांमदजगदवमुक्तदृष्टांतानुसारेणशांतंब्रह्मैवाततंविस्तृतम् ॥ २३ ॥
र्त्तरिउत्पत्त्याद्यसिद्धेःसांख्यानांकल्पनाउन्मत्तचेष्टेवेत्युपसंहरति ॥ सहकारीति ॥ स्वयंभवतिअस्तीतिस्वयंभूः ॥ प्रागुत्पत्तेःपृथक्सत्त्वेनाभ्युपगतोपिपदार्थइत्यर्थः ॥ शून्यतःशु
न्यकल्पप्रधानादित्यर्थः ॥ जायतेचेतिचकारोजन्युत्तरभाविनीसत्ताप्रागेवाभ्युपगताचेज्जनिकल्पनवैयर्थ्यमपीतिदोषांतरसमुच्चयार्थः ॥२४॥ सर्वार्थस्वप्नदर्शनहेतुत्वाद्विकल्पा
स्तल्पमिव तत्कल्पनेपिहेतुर्दीर्घनिद्राअविद्यासैवस्वरूपजागरेणविद्राविताचेत्स्वप्नव्याघ्रादिकल्पजन्ममृत्य्वादिभयहेतुर्बाधादभयः ॥ तल्पादुत्थितेनराज्ञास्वसभाभूरिवभूपिता
अलंकृताब्रह्मवित्सभाभूर्येनतथाविधोभवेत्युपदेशआशीश्च ॥ २५ ॥ ॥ इतिश्रीवासिष्ठम० स्थितिप्र० द्वितीयःसर्गः ॥ २ ॥ ॥ ७ ॥ ॥ विवर्त्तत्वंप्रतिष्ठाप्याऽपवादोऽत्रप्र
दर्श्यते ॥ बोधदृष्ट्याज्ञदृष्ट्यातुजगदानंत्यमुच्यते ॥ १ ॥ बाह्यघटाद्युत्पत्तावुत्पत्तिकर्त्रतिरिक्तसहकार्यपेक्षास्तु जगत्तुत्वयाहिरण्यगर्भमनःसंकल्पजंतदीयस्मृतिमनोराज्यकल्पमु

इमेसर्गाःप्रस्फुरंतिस्वात्मनात्मनिनिर्मले ॥ नभसीवनभोभागानिराकारानिराकृतौ ॥२१॥ द्रवत्वानीवतोयस्यस्पंदाइवसदागतौ ॥ आ
वर्त्ताइवचांभोधेर्गुणिनोवायथागुणाः ॥२२॥ विज्ञानघनमेवैकमिदमेवमवस्थितम् ॥ सोदयास्तमयारंभमनंतंशांतमाततम् ॥२३॥
सहकार्यादिहेतूनामभावेशून्यतोजगत् ॥ स्वयंभूर्जायतेचेतिकिलोन्मत्तकफूत्कृतम् ॥२४॥ प्रशांतसर्वार्थकलाकलंकोनिरस्तनिःशेषवि
कल्पतल्पः ॥ चिरायविद्रावितदीर्घनिद्रोभवाभयोभूपितभूःप्रबुद्धः ॥ २५ ॥ ॥ इ० वा० वा० दे० मो० स्थि० स्थितिबीजोपन्यासोना
मद्वितीयःसर्गः ॥ २ ॥ ॥ ७ ॥ ॥ श्रीरामउवाच ॥ ॥ महाकल्पांतसर्गादौप्रथमोसौप्रजापतिः ॥ स्मृत्यात्माजायतेमन्येस्मृत्यात्मै
वततोजगत् ॥ १ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ महाप्रलयसर्गादावेवमेतद्रघूद्वह ॥ स्मृत्यात्मैवभवत्यादौप्रथमोसौप्रजापतिः ॥ २ ॥ तत्सं
कल्पात्मकजगत्स्मृत्यात्मैवमिदंततः ॥ भातिसंकल्पनगरंस्थितंपूर्वंप्रजापतेः ॥ ३ ॥ स्मृतिर्नसंभवत्येवसर्गादौपरमात्मनः ॥ जन्माभा
वात्कथंकुत्रनभसीवमहाद्रुमः ॥ ४ ॥ क्कं नचतत्रसहकार्यपेक्षादृष्टा एवंचप्रलयेप्रकृतौस्वसत्तायांतिरोभूयसन्नेवमनोरूपःप्रजापतिःस्मृत्यात्माजायते
तस्मिंश्चसंस्कारात्मनासदेवजगत्स्मृत्यात्मैवजायतेचेत्कोविरोधइतिगूढाभिसंधिनारामःपृच्छति ॥ महाकल्पांतेति ॥ १ ॥ अस्त्वेवंतथापिजगतोनप्रलयेसत्त्वसिद्धिः स्वमनो
रथस्मृत्यादिविषयस्यस्वकालेपिसत्त्वाप्रसिद्धेस्तद्बलेनप्रलयेसत्त्वकल्पनासिद्धेरितिगूढाभिसंधिरेवगुरुरभ्युपगमेनसमाधत्ते ॥ महाप्रलयेति ॥ २ ॥ प्रजापतेःपूर्वंप्राथमिकंसंक
ल्पनगरमेवैतज्जगदितिस्थितमित्यर्थः ॥३॥ तर्हिबाह्यविकारमनोतिरिक्तविषयात्मनाजगन्माभूत्सत्यंमनोविकारात्मनातुसत्यमेव यथाचित्रतुरगोमांसविकारात्मनाह्यसत्योपिरंग
द्रव्यविकारात्मनासत्यस्तद्वदितिरामशंकांलिंगैरुपलक्ष्याह ॥ स्मृतिरिति ॥ अयंभावः ॥ सतिहिस्मर्त्तरिस्मृत्यादयोमनःपरिणामाःस्युः ॥ तत्रनतावत्परपरिकल्पितंप्रधानंस्मृतिस
मर्थम् ॥ मृदादिवदचेतनत्वात् ॥ नापिपुरुषाः ॥ परैस्तेषामसंगोदासीननिर्विकारत्वाभ्युपगमात् ॥ परस्परव्यावर्त्तकधर्मानभ्युपगमेनभेदासिद्ध्यापरमात्माभेदेतुसुतरांस्मृतिर्नसंभ
वत्येव ॥ जन्माभावात्विकारांतराणांतत्पूर्वकत्वात्अप्राणोह्यमनाःशुभ्रइत्यादिश्रुत्यातस्यमनोनिषेधात्तद्द्वारास्मर्त्तृत्वासिद्धेस्तस्यस्मृतिर्नभोद्रुमकल्पैवेति ॥ ४ ॥

१ मनारंभामित्यपिपाठः

ननुयथाप्रात्यहिकीसुषुप्तिस्तथाप्रलयोपितत्रचलीनस्यमनसोजागरादाविवसर्गादावप्याविर्भावात्तद्वच्छिन्नप्रजापतेरन्यस्यवास्मर्तृत्वेकोविरोधइत्याशयेनरामःशंकते ॥ न संभवतीति ॥ प्राक्स्मृतिःपूर्वकल्पीयसंस्कारः ॥ ५ ॥ अभिसंधिमुद्घाटयन्वसिष्ठःपरिहरति ॥ येमहाप्रलयेइत्यादिना ॥ अयंभावः ॥ इयंतवशंकाकिंहिरण्यगर्भजीवएकएव स्वमनसानानाजीवशरीरादिभेदान्परिकल्प्यसंसरतीतिमतेनवानानाजीवाःस्वस्वोपभोगयोग्यप्रपंचभागंकल्पयंतोहिरण्यगर्भमपिस्वस्वबुद्ध्यनुसारेणसर्वस्रष्टारंकल्पयंतीतिमते नवा ॥ तत्रद्वितीयेमहाकल्पांतसर्गादौप्रथमोसौप्रजापतिरित्यादित्वदीयशंकोपक्रमविरोधात्सृष्टिश्रुत्यननुगुणत्वात्प्रथमकल्पःपरिशिष्यते ॥ तत्रचप्राक्तनकल्पीयजीवजगतां महाप्रलयकालेहिरण्यगर्भमुक्त्यैवमुक्तत्वाज्जीवांतरापरिशेषात्स्मर्तानकश्चिदस्तीतिनैतत्सर्गसिद्धिरिति ॥ अक्षरार्थःस्पष्टः ॥ ६ ॥ ७ ॥ ८ ॥ एवंपूर्वपूर्वकल्पीयसर्गाअपिस्मृति

श्रीरामउवाच ॥ ॥ नसंभवतिकिंब्रह्मन्सर्गादौप्राक्तनीस्मृतिः ॥ महाप्रलयसंमोहैर्नश्यतिप्राक्स्मृतिःकथम् ॥ ५ ॥ ॥ श्रीवसिष्ठउवाच ॥ येमहाप्रलयेप्राज्ञाःसर्वेब्रह्मादयःपुरा ॥ किलनिर्वाणमायातास्तेवश्यंब्रह्मतांगताः ॥ ६ ॥ प्राक्तनःकःस्मृतेःकर्तातस्मात्कथयसुव्रत ॥ स्मृतिर्निर्मूलतांयातास्मर्तुर्मुक्ततयायतः ॥ ७ ॥ अतःस्मर्तुरभावेनस्मृतिर्वोदेतिकिंकथम् ॥ अवश्यंहिमहाकल्पेसर्वेमोक्षैकभागिनः ॥ ८ ॥ नानुभूतेनुभूतेचस्वतश्चिद्योम्नियास्मृतिः ॥ साजगद्भूरितिप्रौढादृश्यासास्येवचित्प्रभा ॥ ९ ॥ भातिसंवित्प्रभैवेयमनाद्यंतावभासिनी ॥ यत्तदेतज्जगदितिस्वयंभूरितिचस्थितम् ॥ १० ॥ अनादिकालसंसिद्धंयद्भानंब्रह्मणोनिजम् ॥ सआतिवाहिकोदेहोविराजोजगदाकृतिः ॥ ११ ॥ परमाणाविदंभातित्रिजगत्सवनाभ्रखम् ॥ देशकालक्रियाद्रव्यदिनरात्रिक्रमान्वितम् ॥ १२ ॥ परमाणुःप्रविततस्तस्यास्तेतादृगेव च ॥ भातिभासुरताकारितादृग्गिरिकुलंपुनः ॥ १३ ॥ तत्रापितादृगाकारमेवप्रत्यनुसंततम् ॥ दृश्यमाभातिभारूपमेतदंगनवास्तवम् ॥ १४ ॥

रूपानसिद्धंतीतियास्मृतिरितित्वयाशंकिताजगद्भूर्जगत्स्थितिःसाप्रौढब्रह्मचित्प्रभैवसास्येवसदेतिसत्कार्यवादिनीनांश्रुतीनामाशयइत्यर्थः ॥ ९ ॥ उक्तार्थमेवस्पष्टमाह ॥ भातीति ॥ १० ॥ विराजोब्रह्मांडशरीरस्योपादानभूतआतिवाहिकःसूक्ष्मोदेहःसपरमात्मैवेत्यर्थः ॥ तथाचब्रह्मैवसूक्ष्मस्थूलभावारोपक्रमेणजगदात्मनाभातीतिभावः ॥ ११ ॥ अव्यवस्थितस्वभावत्वादपिजगतोनजगद्रूपेणसत्ताकिंतुब्रह्मरूपेणैवेत्याशयेनाव्यवस्थितस्वभावमुपपादयति ॥ परमाणावित्यादिना ॥ १२ ॥ तस्यपूर्वपरमाणोरंतरन्यःप्रविततः परमाणुरास्तेसचतादृक्पूर्वपरमाणुसदृशएव ॥ पुनस्तत्रापितादृक्सवनाभ्रखंगिरिकुलंभातीत्येवंप्रत्यनुसंततमितिपरेणान्वयः ॥ १३ ॥ उपपादितेनयत्फलितंतदाह ॥ एतदिति ॥ १४ ॥

एवंचसन्मात्रदृष्टिस्तत्त्वज्ञंप्रतिस्वतोयथाअनंताएवमसदनृतजगद्दृष्टिरप्यज्ञंप्रतिसंख्ययाअनंतैवेत्याह ॥ इतीति ॥ अभ्युदितंपरमाभ्युदयंप्राप्तम् ॥ बुद्धंतत्त्वज्ञंप्रति॥ मिअबुद्धं
सनाबुद्धोऽज्ञस्तंप्रतिवा ॥ १५ ॥ तदेवस्पष्टीकृत्यदर्शयति ॥ बुद्धंप्रतीत्यादिना ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ शक्यंतेयदीतिशेषः ॥ पूर्वश्लोकान्तेतिवानुषंजनीयम् ॥ २० ॥
वहंतिप्रवहंतिभ्रमंतीतियावत् ॥ २१ ॥ ननुनिष्प्रपंचस्यकूटस्थस्यकथंसविकारसर्गात्मनाभानमितिचेद्यथानीरूपस्याशून्यस्यचाकाशस्यतद्विरुद्धरूपत्वच्छून्यतयाभानंतद्वदि
त्याह ॥ शून्येति ॥ शून्यमावरणाभावः असन्नैल्यंचतदनुभवमात्रात्मतथाऽनुभूयमानंनतुवास्तवपूर्णनीरूपानुभवात्मेत्यर्थः ॥ २२ ॥ नयत्यधइति॥ उदरमंतरंकुरुते अथतस्य

इत्यस्यंतोनसद्दृष्टेरसद्दृष्टेश्चवाक्वचित् ॥अस्यास्त्वभ्युदितंबुद्धंनाबुद्धंप्रतिवानघ॥१५॥बुद्धंप्रतीदंब्रह्मैवकेवलंशांतमव्ययम् ॥अबुद्धंप्र
तिबुद्ध्यैतद्भासुरंभुवनान्वितम् ॥१६॥यथेदंभासुरंभातिजगदंडकजृंभितम् ॥यथाकोटिसहस्राणिभांत्यन्यान्यप्यणावणौ॥१७॥यथा
स्तंभेपुत्रिकांतस्तस्याःस्वांगेपुपुत्रिका॥ तस्याश्चपुत्रिकास्त्यंगेतथात्रैलोक्यपुत्रिका॥१८॥नाभिन्नानापिसंख्येयायथाद्रौपरमाणुकाः॥
तथाब्रह्मबृहन्मेरौत्रैलोक्यपरमाणवः॥ १९ ॥ सूर्यांशुपुसंख्यातुंशक्यंतेलघवोणवः॥ उत्पद्यंतेचिदादित्येत्रैलोक्यपरमाणवः॥ २० ॥
यथाणवोवहंत्यर्कदीप्तिष्वप्सुरजःसुच ॥ तथावहंतिचिद्व्योम्नित्रैलोक्यपरमाणवः॥२१॥शून्यानुभवमात्रात्मभूताकाशमिदंयथा॥स
र्गानुभवमात्रात्मचिदाकाशमिदंतथा॥२२॥सर्गस्तुसर्गशब्दार्थतयाबुद्धंनयत्यधः॥सब्रह्मशब्दार्थतयाबुद्धःश्रेयोभवत्यलम् ॥२३॥
विज्ञानात्माशासिताविश्वबीजंब्रह्मैवालंस्वंचिदाकाशमात्रम्॥यस्माज्जातंयत्तदेवेतिविद्याद्वेद्यंस्वांतर्बोधसंबोधमात्रम् ॥२४॥ ॥इ०
वा०वा०दे०मोक्षोपायेषुस्थि०जगदानंत्यवर्णनंनामतृतीयःसर्गः॥ ३ ॥ ॥ ६ ॥ ॥ ॥श्रीवसिष्ठउवाच॥ ॥इंद्रियग्रामसंग्रा
मसेतुनाभवसागरः ॥ तीर्यतेनेतरेणेहकेनचिन्नामकर्मणा ॥ १ ॥शास्त्रसत्संगमाभ्यासात्सविवेकोजितेंद्रियः॥ अत्यंताभावमेतस्यह
श्यस्याप्यवगच्छति॥ २॥

भयंभवतीत्यादिश्रुतेः ॥ श्रेयोभवतीति ॥ तरतिशोकमात्मविदित्यादिश्रुतेरितिभावः ॥ २३ ॥ किंतटस्थतयापिज्ञातंब्रह्मश्रेयोभवतिनेत्याह ॥ विज्ञानात्मेति ॥ योविज्ञानात्मा
जीवाख्यःप्रत्यगात्मायश्चविश्वस्यबीजंकारणंशासिताचेश्वरस्तौपरमार्थदृशापरिशोधनेअलंपूर्णंस्वंप्रत्यगेकरसंचिदाकाशमात्रंब्रह्मैव ॥ यतोहिवाह्यमाभ्यंतरंचभेदकोपाधिद्व
यंब्रह्मणःसकाशादेवजातंश्रूयते ॥ यद्यस्माज्जातंतत्तदेवेतिचतदनन्यत्वमारंभणशब्दादिभ्यइत्यादिनावगतंतस्मात्सर्वंवेद्यंस्वांतर्बोधेसंबोधमात्रंशुद्धंचिन्मात्रमित्यर्थः ॥२४॥ ॥
इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेस्थिति०तृतीयःसर्गः ॥ ३ ॥ ॥ ६ ॥ ॥ इहविश्वस्थितेर्मूलंसेंद्रियंमनईर्यते ॥ तस्योच्छेदेजगच्छून्यंदृश्यासंभवदर्शनात् ॥ १ ॥ इंद्रि
यग्रामाणांसंग्रामोजयस्तल्लक्षणेनसेतुना ॥ १ ॥ इंद्रियजयेचविवेकउपायस्तत्रचसज्जनसच्छास्त्रैकनिष्ठतोपायइत्याशयेनाह ॥ शास्त्रेति ॥ २ ॥

विहितस्येंद्रियजयस्यप्रकृतसंबंधंवक्तुंप्रागुक्तंस्मारयति ॥ एतदिति ॥ रूपिणांसौंदर्यवतांवरश्रेष्ठ ॥ प्रयांतिअपगच्छंति ॥ नयांतीतिपाठेप्ययमेवार्थः ॥ ३ ॥ भोक्तृभोग्यभोगाकारपरिणतानिविहितनिषिद्धकर्माण्येवतनुःशरीरंयस्यतथाविधोजगच्छाखीसंसारवृक्षश्छिन्नोभवेत् ॥ ४ ॥ जगज्जाललक्षणआमयोरोगः ॥ ५ ॥ ननुमनसिचिकित्सितेपिदेहाधीनेसुखदुःखेस्यातांतत्राह ॥ तदेतदिति ॥ मनसोदेहाकारमननमेवस्वमइवआकुलक्रियासमर्थंदेहोजायते ॥ ६ ॥ तर्हिमनश्चिकित्सायांकिमौषधंतदाह ॥ दृश्येति ॥ दृश्यस्यअत्यंताभावोबाधस्तस्मादृते ॥ तृतीयाछांदसी ॥ ७ ॥ ननुमनोरोगआभ्यंतरोदृश्यंतुबाह्यंतत्कथंबाह्यार्थात्यंतासंभवादांतरमनश्चिकित्सासंभवस्तत्राह ॥ एतदिति ॥ एत

एतत्तेकथितंसर्वंस्वरूपंरूपिणांवर ॥ संसारसागरश्रेण्योयथायांतिप्रयांतिच ॥ ३ ॥ बहुनात्रकिमुक्तेनमनःकर्मद्रुमांकुरः ॥ तस्मिंश्छिन्नेजगच्छाखीछिन्नःकर्मतनुर्भवेत् ॥ ४ ॥ मनःसर्वमिदंरामतस्मिन्नंतश्चिकित्सिते ॥ चिकित्सितोवैसकलोजगज्जालामयोभवेत् ॥ ५ ॥ तदेतज्जायतेलोकेमनोमननमाकुलम् ॥ मनसोव्यतिरेकेणदेहःक्वकिलदृश्यते ॥ ६ ॥ दृश्यात्यंतासंभवेनकृतेनान्येनहेतुना ॥ मनःपिशाचःप्रशमंयातिकल्पशतैरपि ॥ ७ ॥ एतच्चसंभवत्येवमनोव्याधिचिकित्सिते ॥ दृश्यात्यंतासंभवात्मपरमौषधमुत्तमम् ॥ ८ ॥ मनोमोहमुपादत्तेम्रियतेजायतेमनः ॥ तत्त्वचिंताप्रसादेनबध्यतेमुच्यतेपुनः ॥ ९ ॥ स्फुरतीदंजगत्सर्वंचित्तेमननमूर्च्छिते ॥ शून्यमेवांबरेस्फारेगंधर्वाणांपुरंयथा ॥ १० ॥ मनसीदंजगत्कृत्स्नंस्फारंस्फुरतिचास्तिच ॥ पुष्पगुच्छइवामोदस्तत्स्थंतस्मादिवेतरत् ॥ ११ ॥ यथातिलकणेतैलंगुणोगुणिनिवायथा ॥ यथाधर्मिणिवाधर्मस्तथेदंचित्तकेजगत् ॥ १२ ॥ रश्मिजालंयथासूर्येयथालोकस्तुतेजसि ॥ यथौष्ण्यंचित्रभानौचमनसीदंतथाजगत् ॥ १३ ॥ शैत्यंयथैवतुहिनेयथानभसिशून्यता ॥ यथाचंचलतावायौमनसीदंतथाजगत् ॥ १४ ॥

दृश्यात्यंतासंभवात्मकंपरमौषधंमनोव्याधिचिकित्सितेसंभवत्येवोपायइतिशेषः ॥ चिकित्सितेइतिभावेक्तः ॥ ८ ॥ कथंसंभवतितदाह ॥ मनइति ॥ नहिमनसआंतरताअर्थानांबाह्यताचवास्तवीकिंतुमनएवतथाद्वैविध्यादिकल्पनयामोहंभ्रांतिमुपादत्ते ॥ जन्ममृत्युबंधमोक्षादिचकल्पयतीत्यर्थः ॥ ९ ॥ कथमिदंज्ञातमितिचेदन्वयव्यतिरेकाभ्यामित्याह ॥ स्फुरतीति ॥ मननेनमूर्च्छितेसमुच्छ्रिते ॥ १० ॥ तथाचविमर्शोजगन्मनोधर्मएवेतिनधर्मिनिवृत्तौस्थातुमर्हतीत्याशयेनदृष्टांतानाह ॥ मनसीत्यादिना ॥ धर्मेषुधर्मिभेदोनवास्तवइतिद्योतनायात्यइवकारः ॥ ११ ॥ १२ ॥ चित्रभानौअग्नौ ॥ १३ ॥ १४ ॥

मनोजगतोर्धर्मिधर्मभावेनाभेदेविधर्मिमनोनाशादेवजगन्नाशोनतुवैपरीत्येनतथैवलोकेदर्शनादित्याशयेनापसंहरति ॥
नष्टंभवति ॥ १५ ॥ ॥ इतिश्रीवासिष्ठम॰तात्पर्यप्रकाशेस्थिति॰चतुर्थःसर्गः ॥ ४ ॥ ॥ ७ ॥ ॥ भृगावत्रसमाधिस्थेशुक्रस्यक्रीडतोगिरौ ॥ अप्सरोदर्शनेमोहात्तन्मयीभाव२
यंते ॥ १ ॥ कथंकीदृशदृष्टांतप्रकारेणेवबहिःस्फुरन्नयंस्फारःसंसारोमनसियथास्फुरतिप्रत्यक्षंप्रतिभातितथादृष्टांतदृष्ट्यादृष्टांतप्रदर्शनेनकथयेत्यर्थः ॥ १ ॥ २ ॥ उक्तान्ये
वात्रेंद्रादिजगंतिदृष्टांतइत्याह ॥ यथेति ॥ ३ ॥ आकुलाकृतेर्व्याकुलचित्तस्य ॥ ४ ॥ भार्गवोपाख्यानमप्यत्रदृष्टांतत्वेनावतारयति ॥ भार्गवस्येति ॥ भोगाधिनाथत्वमप्सरो

मनोजगज्जगदखिलंतथामनःपरस्परंत्वविरहितेसदैवहि ॥ तयोर्द्वयोर्मनसिनिरंतरंक्षितेक्षितंजगन्नतुजगतिक्षितेमनः ॥ १५ ॥ ॥ इ॰
वा॰वा॰दे॰मो॰स्थि॰स्थित्यंकुरकलनंनामचतुर्थःसर्गः ॥ ४ ॥ ॥ ७ ॥ ॥ श्रीरामउवाच ॥ ॥ भगवन्सर्वधर्मज्ञपूर्वापरविदां
वर ॥ अयंमनसिसंसारःस्फारःकथमिवस्थितः ॥ १ ॥ यथायंमनसिस्फारःसंसारःस्फुरतिस्फुरन् ॥ दृष्टांतदृष्ट्यास्फुटयातथाकथयमेनघ
॥ २ ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ यथैंद्रवानांविप्राणांजगंत्यवपुषामपि ॥ स्थितानिजातदार्ढ्यानिमनसीदंतथास्थितम् ॥ ३ ॥ लव
णस्ययथाराज्ञश्चेंद्रजालाकुलाकृतेः ॥ चंडालत्वमनुप्राप्तंतथेदंमनसिस्थितम् ॥ ४ ॥ भार्गवस्यचिरंकालंस्वर्गभोगबुभुक्षया ॥ यथाभो
गाधिनाथत्वंसंसारित्वंबभूवच ॥ ५ ॥ भोगेश्वरत्वंचतथातथेदंमनसिस्थितम् ॥ ॥ श्रीरामउवाच ॥ ॥ भगवन्भृगुपुत्रस्यस्वर्गभोग
बुभुक्षया ॥ ६ ॥ कथंभोगाधिनाथत्वंसंसारित्वंबभूवच ॥ ॥ श्रीवसिष्ठउवाच ॥ ॥ शृणुरामपुरावृत्तंसंवादंभृगुकालयोः ॥ ७ ॥ सानौ
मंदरशैलस्यतमालविटपाकुले ॥ पुरामंदरशैलस्यसानौकुसुमसंकुले ॥ ८ ॥ अतप्यततपोघोरंकस्मिंश्चिद्भगवान्भृगुः ॥ तमुपास्तेस्मते
जस्वीबालःपुत्रोमहामतिः ॥ ९ ॥ शुक्रःसकलचंद्राभःप्रकाशइवभासुरः ॥ भृगुर्वनवरेतस्मिन्समाधावेवसंस्थितः ॥ १० ॥ सर्वकालंस
मुत्कीर्णोवनोपलतलादिव ॥ शुक्रःकुसुमशय्यासुकलधौताजिरेषुच ॥ ११ ॥ मंदारोद्दामदोलासुबालोरमणलीलया ॥ विद्याविद्याद
शोर्मध्येशुक्रोप्राप्तमहापदः ॥ १२ ॥ त्रिशंकुरिवरोदोंतरवर्ततदाकुलः ॥ निर्विकल्पसमाधिस्थेसकदाचित्पितर्यथ ॥ १३ ॥

भोगलिप्सुत्वम् ॥ संसारित्वंतदर्थंस्वर्गादिगंतृत्वंजन्मांतरवत्त्वंच ॥ नाथतिरत्रोपयाञ्चायाम ॥ ५ ॥ भोगेश्वरत्वंस्वर्गेअप्सरोभोक्तृत्वम् ॥ प्रश्नःस्पष्टः ॥ ६ ॥ ७ ॥ सानौप्रस्थेजा
तंभृगुकालयोःसंवादंशृण्वितिपूर्वेणान्वयः ॥ उक्तस्योपोद्घातमाह ॥ पुरेत्यादिना ॥ ८ ॥ ९ ॥ सकलःपूर्णः ॥ भास्करइतिपाठेप्रकाशतइतिप्रकाशःस्फुरन्भास्करइव ॥ १० ॥
सर्वकालंसंस्थितइतिपूर्वेणान्वयः ॥ वनोपलतलात्प्रकृतेःसमुत्कीर्णटंकच्छेदनिष्पादितइवेतिनिश्चलत्वेनोत्प्रेक्षा ॥ कलधौताजिरेषुरूप्यहेमवेदिकासु ॥ ११ ॥ विद्यादृक्पारमा
र्थिकात्मतत्त्वदर्शनंअविद्यादृक्पामरादिप्रसिद्धजगत्सत्यतादर्शनंतयोर्मध्ये ॥ १२ ॥ रोदस्योर्द्यावाभूम्योरंतर्मध्येविश्वामित्रनिर्मितस्वर्गेत्रिशंकूराजर्षिरिवअवर्त्तत ॥ अतएव
रागादिनाआकुलः ॥ १३ ॥

अव्यग्रोविषयांतरेअव्याक्षिप्तचित्तः ॥ १४ ॥ क्षीरोदस्यमध्याल्लुलितांमथनेनोत्पादिताम् ॥ लक्ष्म्यादप्सरसामपिक्षीरोदादुत्पत्तिप्रसिद्धेरुभयविशेषणम् ॥१५॥ सुगंधितोन भोनिलौयया ॥ नभोग्रहणमपगतेप्यनिलेतद्देशस्यचिरंसुगंधित्वद्योतनार्थम् ॥ १६ ॥ देहलक्षणादिशोरुदयोयासांताभिर्दीप्तिभिःकिरणैः ॥ १७ ॥ अंबुनिधेर्वपुसंस्थानमिव उल्लसत्तरलंच ॥ १८ ॥ सचउशनातदनुअप्सरोदर्शनानंतरंमनसिजस्येषुभिःपराहतमाशोतेविषयेषुमुह्यतीत्याशयंमनोयथाशक्तिविवेकैःपरिबोध्यबहिःशारीरकांतानुसरणा द्व्यापारान्निरुद्धैकाग्रतामापाद्यापिअंतर्विगलितेतरवृत्तितयावध्येकाग्रचित्तत्वात्तदात्मनावधूमयएवबभूव ॥ यच्चित्तस्तन्मयोभवतीत्यादिश्रुतिस्मृत्यनुभवप्रसिद्धिद्योतनाय हृदतिनिपातः ॥ १९ ॥ ॥ इतिश्रीवा०ता०स्थितिप्रकरणेपंचमःसर्गः ॥ ५ ॥ ॥५॥ ॥ इहशुकस्यमनसास्वर्गगमनमुच्यते ॥ तत्रशक्रेणसन्मानात्संनिधावुपवेशनम् ॥१॥

अव्यग्रोभवदेकांतेजितारिरिवभूमिपः ॥ ददर्शाप्सरसंतत्रगच्छंतींनभसःपथा ॥ १४ ॥ क्षीरोदमथ्यलुलितांलक्ष्मीमिवजनार्दनः ॥ मंदारमालावलितांमंदानिलचलालकाम् ॥ १५ ॥ हारझांकारिगमनांसुगंधितनभोनिलाम् ॥ लावण्यपादपलतांमदघूर्णितलोचनाम् ॥ १६ ॥ अन्तीकृततद्देशांदेहेंदूदयदीप्तिभिः ॥ कांतामालोक्यतस्याभूदुल्लसत्तरलंमनः ॥ १७ ॥ दृष्टनिर्मलपूर्णेंदुवपुरंबुनिधेरिव ॥ साप्यालोक्यशुक्रमुखंतथापरवशाह्यभूत् ॥ १८ ॥ मनसिजेषुपराहतमाशयंसपरिबोध्यमनस्तदनूशना ॥ विगलितेतरवृत्तितयात्मनासचवधूमयएवबभूवह ॥ १९ ॥ ॥ इ०वा०वा०दे०मो०स्थि०भार्गवोपाख्यानेभार्गवस्खलनंनामपंचमःसर्गः ॥ ५ ॥ ॥ ५ ॥

॥ श्रीवसिष्ठउवाच ॥ ॥ अथतांमनसाध्यायंस्तत्रैवामीलितेक्षणः ॥ आरब्धवान्मनोराज्यमिदमेकःकिलोशना ॥ १ ॥ एषाहिललनाव्योम्निसहस्रनयनालये ॥ संप्राप्तोयमहंस्वर्गमालोलसुरसुंदरम् ॥ २ ॥ इमेतेमद्रुमंदारकुसुमोत्तंससुंदराः ॥ द्रवत्कनकनिष्यंदविलासिवपुषःसुराः ॥ ३ ॥ इमास्तालोचनोल्लासदृष्टनीलाब्जदृष्टयः ॥ मुग्धहासविलासिन्यःकांताहरिणदृष्टयः ॥ ४ ॥ इमेतेकौसुमोद्योताअन्योन्यप्रतिबिंबिताः ॥ विश्वरूपोपमाकारामरुतोमत्तकाशिनः ॥ ५ ॥

इदंवक्ष्यमाणप्रकारंमनोराज्यम् ॥ एवकारःप्रकारांतरवारणाद्देहविस्मृतिपर्यंततायोतनार्थः ॥ १ ॥ एषापुरोवर्तिनीमयानुगम्यमानासहस्रनयनस्येंद्रस्यालयेस्वर्गंगच्छतीतिशेषः ॥ अयंतामनुगच्छन्नहम् ॥ २ ॥ कनकनिष्यंदोद्रुतसुवर्णम् ॥ तद्विअत्यंतकांतिमत्प्रसिद्धम् ॥ तद्वद्विलासिशोभमानंवपुर्येषाम् ॥ ३ ॥ लोचनोल्लासेनप्रत्यक्षेणदृष्टानिनीलाब्जानीवदृष्टयोयासांताइमाःकांताअप्सरसः ॥ ४ ॥ कौसुमैःपारिजातादिकुसुमरचितमाल्यैरुद्योततप्रकाशंतइतिकौसुमोद्योताः ॥ कौस्तुभोद्योताइतिपाठेकौस्तुभवद्द्योतमानाः ॥ अन्योन्यप्रतिबिंबितत्वादेवविश्वरूपःसर्वाकारोहरिस्तदुपमाकाराः ॥ मत्ताहृष्टाःकाशंतेदीप्यंतेतच्छीलाः ॥ मरुतोदेवाः ॥ प्राग्वर्णितानामपिदेवानामकारांतरे प्रकर्षेण शीघ्र

ऐरावणस्यैरावतस्यकटौगंडौ ॥ ताभ्यांमदजलंलक्ष्यते ॥ तदामोदेऽपिविरक्तैरनासक्तैर्मधुपैःश्रुताआकर्णिताःकाकल्यामधुरास्फुटध्वनिः ॥ ८ ॥ रणवृत्तांतेषुयुद्धप्रसंगेषुहे

जेपुचलंतोभ्रमंतोवैरिंचाविरिंचिसंबंधिनोहंसाःसारसाश्चयस्याम ॥ ७ ॥ तनुद्योतैःशरीरकांतिभिःकीर्णाःपरितःप्रसारितादीप्तानलार्चिषोयैः ॥ १० ॥ ११ ॥ १२ ॥ चंद्रांशुनिकराइवसुखस्पर्शआ

तिभिरायुधैःकंडूयितमिवआननंयस्य ॥ ९ ॥ चरंतःप्रसरंतश्चारुचामीकरमयाइवआतपादेहविमानादिकांतयोयेषाम् ॥

इयंसाकनकांभोजचलद्वैरिंचसारसा ॥ मंदा तिभिरायुधैःकंडूयितमिवआननंयस्य ... गीर्वाणगणगीतयः ॥ ६ ॥ इयंसाकनकांभोजचलद्वैरिंचसारसा ॥ मंदा

ऐरावणकटामोदविरक्तमधुपश्रुताः ॥ इमास्ताःकाकलीगीतागीर्वाणगणगीतयः ॥ ६ ॥ इयंसाकनकांभोजचलद्वैरिंचसारसा ॥ मंदा

किनीतटोद्यानविश्रांतसुरनायका ॥ ७ ॥ एतेतेयमचंद्रेंद्रसूर्यानलजलानिलाः ॥ लोकपालास्तनूद्योतकीर्णदीप्तानलार्चिपः ॥ ८ ॥ अ

यंसरणवृत्तांतहेतिकंडूयिताननः ॥ ऐरावणोरणेदंतप्रोतदैत्येंद्रमंडलः ॥ ९ ॥ इमेतेभूतलस्थानाद्व्योम्नितारकतांगताः ॥ वैमानिकाश्चरच्चा

रुचामीकरमयातपाः ॥ १० ॥ मेरूपलतलास्फालसीकराकीर्णदेवताः ॥ एतास्ताःकीर्णमंदारागंगासलिलवीचयः ॥ ११ ॥ एताःप्रस्त

मंदारमंजरीपुंजपिंजराः ॥ दोलालोलाप्सरःश्रेण्यःशक्रोपवनवीथयः ॥ १२ ॥ इमेतेकुंदमंदारमकरंदसुगंधयः ॥ चंद्रांशुनिकराकाराः

पारिजातसमीरणाः ॥ १३ ॥ पुष्पकेसरनीहारपटवासरणोत्सुकैः ॥ लतांगनागणैर्व्याप्तमिदंतन्नंदनंवनम् ॥ १४ ॥ कांतगीतरवानंदप्रन

र्तितसुरांगनौ ॥ इमौतौवल्लकीस्निग्धस्वरौनारदतुंबुरू ॥ १५ ॥ इमेतेपुण्यकर्त्तारोभूरिभूषणभूषिताः ॥ व्योमन्युड्डीयमानेषुविमानेषुचसं

स्थिताः ॥ १६ ॥ मदमन्मथमत्तांग्यइमास्ताःसुरयोषितः ॥ देवेश्वरंनिषेवंतेवनंवनलताइव ॥ १७ ॥ इंद्राश्मजालकुसुमाश्चिंतामणिगुलु

च्छकाः ॥ कल्पवृक्षाइमेपक्वफलस्तबकदंतुराः ॥ १८ ॥ इहतावदिमंशक्रमहमासनसंस्थितम् ॥ द्वितीयमिवत्रैलोक्यस्रष्टारमभिवादये

॥ १९ ॥ इतिसंचिंत्यशुक्रेणमनसैवशचीपतिः ॥ तेनाभिवादितस्तत्रद्वितीयइवखेभृगुः ॥ २० ॥ अथसादरमुत्थायशुक्रःशक्रेणपूजितः ॥

गृहीतहस्तआनीयसमीपमुपवेशितः ॥ २१ ॥

कारःशैत्यमांद्यादियुक्तःसन्निवेशोयेषाम् ॥ १३ ॥ पुष्पैःकेसरैर्नीहारैर्हिममकरंदकणैःपटान्वासयंतिसुगंधयंतीतिपटवासाःपरागास्तैश्चयःपवनांदोलनक्रीडार्थंचपरस्परताडनल

क्षणोरणस्तत्रउत्सुकैरासक्तैर्लतागणैरंगनागणैश्चलतालक्षणैरंगनागणैर्वालतासदृशैरंगनागणैर्वाव्याप्तम् ॥ १४ ॥ नारदतुंबुरूगंधर्वविशेषौवल्लकीवीणा ॥ १५ ॥ १६ ॥ देवेश्वरमिंद्रम्

॥ १७ ॥ इंद्राश्मजालानींद्रनीलसमूहरूपाणि ॥ चंद्राश्मेतिपाठेचंद्रकांतसमूहसदृशानिकुसुमानियेषाम् ॥ चिंतामणयएवगुलुच्छकाःकलिकागुच्छानियेषाम् ॥ पक्वैःफलस्त

बकैर्दंतुराउन्नतदंताइवशोभमानाः ॥ १८ ॥ त्रैलोक्यस्रष्टारंब्रह्माणम् ॥ १९ ॥ २० ॥ समीपमानीयउपवेशितः ॥ २१ ॥

॥ २२ ॥ सकलस्यपूर्णस्य ॥ अमलस्यरजःकलंकरहितस्य ॥ २३ ॥ नरपतिसत्तमस्यराजोत्तमस्येंद्रस्यलालनंलालनीयःपुत्रादिरिवप्रियतमइतियावत् ॥ २४ ॥ ॥ इति
श्रीवासिष्ठ०म०ता०षष्ठःसर्गः ॥ ६ ॥ ॥ ७ ॥ ॥ इहभूयःस्वकांतायाःस्वर्गेशुक्रेणदर्शनम् ॥ परस्परानुरागेणसंगमश्चोपवर्ण्यते ॥ १ ॥ इतिउक्तमनोराज्यप्रकारेणविबुधा
नांनिवासंवैबुधंपुरस्वर्गम् ॥ स्वेनस्वकीयेनतेजसापुण्यसामर्थ्येन ॥ व्यसनंमरणदुःखंविनापि ॥ स्वर्गेणसुखातिशयेनाभितःपरिमोदितोहर्षितः ॥ स्वर्गाभिपरिमोदितइतिपाठेस्व

अथतत्रोपविश्यासौभार्गवःशोभिताननः॥
धन्यस्त्वदागमेनाथस्वर्गोयंशुक्रशोभते॥उप्यतांचिरमेवेहशक्रइत्थमुवाचतम्॥ २२ ॥
श्रियंजहारशशिनःसकलस्यामलस्यच॥ २३ ॥सकलसुरगणाभिवंदितोसौभृगुतनयःशतमन्युपार्श्वसंस्थः॥ चिरतरमतुलामवापतु
ष्टिंनरपतिसत्तमलालनंबभूव॥ २४ ॥ ॥इ०वा०वा०दे०मोक्षोपायेपुस्थि०भार्गवोपाख्यानेभार्गवमनोराज्यंनामषष्ठःसर्गः॥ ६ ॥
श्रीवसिष्ठउवाच॥ ॥इतिशुक्रःपुरंप्राप्यवैबुधंस्वेनतेजसा॥ विसस्मारनिजंभावंप्राक्तनंव्यसनंविना॥ १ ॥ मुहूर्तमिवविश्रम्यतस्यपा
र्श्वेशचीपतेः॥स्वर्गविहर्तुमुत्तस्थौस्वर्गाभिपरिमोदितः॥ २॥ स्वःश्रियंससमालोक्यलोललोचनवांछिताम्॥ स्त्रैणंद्रष्टुंजगामासौनलि
नीमिवसारसः॥ ३॥ तत्रतांमृगशावाक्षींकांतामध्यगतामसौ॥ददर्शविपिनांतस्थांभृगुश्चूतलतामिव॥ ४॥ सापितंभार्गवंरामदृष्ट्वा
परवशाभवत्॥ तामालोक्यलसल्लोलविलासवलिताकृतिम्॥५॥ आसीद्विलीयमानांगोज्योत्स्नामिंदुमणिर्यथा॥ विलीयमानसर्वां
गस्तामवेक्षतकामिनीम्॥ ६॥ चंद्रकांतइवज्योत्स्नांशीतलांखेविलासिनीम् ॥ तेनावलोकितासापितत्परायणतांगता ॥ ७॥ निशांते
चक्रवाकेनकांतेवपरिकूजिता॥रसाद्विकसितानूनमन्योन्यमनुरक्तयोः॥ ८॥ प्रातरर्कनलिन्योर्याशोभासैवतयोरभूत् ॥ संकल्पितार्थ
दायित्वाद्देशस्याभूच्चतेनसा ॥ ९ ॥ सर्वांगंविवशीकृत्यकामायैवसमर्पिता॥ पेतुःस्मरशरास्तस्याम्द्दुष्वंगेषुभूरिशः॥ १० ॥पलाशे
ष्विवपद्मिन्याधाराइवपयोमुचः॥ सावभूवस्मरोद्भूतालोलालिवलयाकुला॥ ११ ॥

गसंचरणशीलेदेवैरुत्साहितइत्यर्थः ॥ २ ॥ स्वःश्रियंस्वर्गशोभांस्वसौंदर्यंचलोललोचनस्यस्त्रीजनस्यवांछितामभीष्टतमामितिसमालोक्यविचार्य ॥ स्त्रैणंस्त्रीसमूहम ॥ ३॥ तां
पूर्वदृष्टामप्सरसम् ॥ भृगुर्भार्गवः ॥ ४ ॥ तामालोक्यसभार्गवोपिपरवशोभवदित्यनुषंगःपरेणवान्वयः ॥ ५ ॥ स्वेदाख्यंसंचारिभावंदर्शयति ॥ विलीयमानांगइति ॥ ६ ॥ ७ ॥
निशिवियोगात्परितःकूजितंरुदितंययासाकांताचक्रवाकिनीनिशांतेप्रातश्चक्रवाकेनावलोकितेव ॥ रसात्प्रेमातिशयाद्विकसिताआविष्कृताशोभा ॥ नूनमित्यभेदोत्प्रेक्षाद्योत

सहशब्दःसादृश्ये ॥ सदृशधर्मिणीत्यर्थः ॥ १२ ॥ १३ ॥ संहारेप्रलयकाले ॥ भूतभुक्रुद्रः ॥ त्रिविष्टपस्यस्वर्गस्य ... ॥ १५ ॥ भूतेपुतस्याःसखीजनपुतस्मि
तीक्ष्णांशौसूर्यवन्निवारकेतिमिरमंडलेतस्मिन्मंडलेनंदनप्रदेशेतस्यमिथुनस्यस्त्रीपुंसद्वंद्वस्येवप्रतिष्ठांस्थैर्यंआगतेप्राप्तेसतीतिपरेणसहान्वयः ॥ २० ॥ २१ ॥ नांगकोऽनंगकःअवलांमामनुव
स्वदेशादभिमतांदिशंगतेषुसत्सु ॥ १६ ॥ १७ ॥ धवलागारंस्फाटिकगृहंतन्मध्यस्थे ॥ १८ ॥ १९ ॥ सुरेभस्यैरावणस्य ॥

मंदवाताभिनुन्नायामंजर्याःसहधर्मिणी ॥ नीलनीरजनेत्रांतांहंससारसगामिनीम् ॥ १२ ॥ मदनःक्षोभयामासगजःकमलिनीमिव ॥
अथतांतादृशींदृष्ट्वाशुक्रःसंकल्पितार्थभाक् ॥ १३ ॥ तमःसंकल्पयामाससंहारइवभूतभुक् ॥ त्रिविष्टपस्यदेशोसौवभूवतिमिराकुलः
॥ १४ ॥ भूलोकस्यांधतमसालोकालोकतटोयथा ॥ लज्जांधकारतीक्ष्णांशौतस्मिंस्तिमिरमंडले ॥ १५ ॥ प्रतिष्ठामागतेतस्यमिथुनस्ये
व मंडले ॥ तेपुसर्वेपुभूतेपुगतेष्वभिमतांदिशम् ॥ १६ ॥ तस्मात्प्रदेशाद्भूलोकेदिनांतेविहगेष्विव ॥ सादीर्घचंचलापांगीप्रवृद्धमदनव्य
था ॥ १७ ॥ आजगामभृगोःपुत्रंमयूरीवारिदंयथा ॥ धवलागारमध्यस्थेपर्यंकेपरिकल्पिते ॥ १८ ॥ विवेशभार्गवस्तत्रक्षीरोदइवमाध
वः ॥ साकरावकलंब्यास्यविवेशावनतानना ॥ १९ ॥ रराजचसुरेभस्यहृदिलग्नेवपद्मिनी ॥ उवाचचेदंमधुरंरसस्नेहार्द्रयागिरा ॥ २० ॥
वचोमधुरमानंदविलासवलिताक्षरम् ॥ पश्यामलेंदुवदनमंडलीकृतकार्मुकः ॥ २१ ॥ अबलामनुबध्नातिमामेपकिलनांगकः ॥ पाहि
मामवलांनाथदीनांत्वच्छरणामिह ॥ २२ ॥ कृपणाश्वासनंसाधोविद्धिसच्चरितव्रतम् ॥ स्नेहदृष्टिमजानद्भिर्मूढैरेवसहामते ॥ २३ ॥ प्रण
याअवगण्यंतेनरसज्ञैःकदाचन ॥ अशंकितोपसंपन्नःप्रणयोन्योन्यरक्तयोः ॥ २४ ॥ अधःकरोतिनिष्पंदंचंद्रमाह्लादनंप्रिय ॥ नतथा
सुखयत्येषाचेतस्त्रिभुवनेशिता ॥ २५ ॥ यथापरस्परानंदःस्नेहःप्रथमरक्तयोः ॥ त्वत्पादस्पर्शनेनेयंसमाश्वस्तास्मिमानद ॥ २६ ॥ चंद्रपा
दपरामृष्टायथानिशिकुमुद्वती ॥ संस्पर्शामृतपानेनतवजीवामिसुंदर ॥ २७ ॥ चंद्रांशुरसपानेनचकोरीचपलायथा ॥ मामिमांचरणा
लीनांभ्रमरींकरपल्लवैः ॥ २८ ॥ आलिंग्यामृतसंपूर्णस्वपद्महृदयेकुरु ॥ इत्युक्त्वापुष्पमृद्वंगीसातस्यपतितोरसि ॥ व्याघूर्णितालिनयना
सुतरोरिवमंजरी ॥ २९ ॥

अशंकितंअन्यगोचरतासोपाधिकत्वविच्छेदापराधगणनादिशंकारहितं
यथास्यात्तथाउपसंपन्नःसंजातः ॥ २४ ॥ निष्पंदंदेवसंजीवनामृतस्राविणम् ॥ अधःकरोतिसंजीवकादाह्लादकाच्चचंद्रसहस्रादपिप्रियतमप्रणयएवातिशेतेइतियावत् ॥ त्रि
भुवनेशितात्रैलोक्यैश्वर्यम् ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ अमृतसंपूर्णस्नेहदयामृतभरितेत्वत्पद्मांतस्थेत्वद्धृदयेचित्ते ॥ सुतरोःकल्पवृक्षस्य ॥ २९ ॥
भ्रातिनिर्बंधयति ॥ अतएवपाहि ॥ २२ ॥ २३ ॥ प्रणयाःप्रीत्यतिशयाः ॥ अवगण्यंतेनबहुमन्यंते ॥

॥ वनस्थलीपद्मिन्योःसाधारणंविशेषणम् ॥ २० ॥ ॥ इतिश्री
विवेशतुःनिर्विविशतुः ॥ गुणश्छांदसः ॥ किंजल्कैःकेसरैस्तदीयपरागैर्गौरेणपीतेनानिलेनघूर्णितासुकंपितासु ॥ वनस्थलीपद्मिन्योःसाधारणंविशेषणम् ॥ २० ॥ ॥ इतिश्री जन्मानिवासनायोगात्तापसत्वंचकीर्त्यते ॥ १ ॥ उत्ते
वासिष्ठम०तात्पर्यप्रकाशेस्थिति०सप्तमःसर्गः ॥ ७ ॥ ॥ ५ ॥ ॥ विविधस्वर्गभोगानिपतितस्यात्रभूरिशः ॥ विबुधासवममृतंदेवभोग्यमासवांतरंवा ॥२॥ अमरवाहिन्या
क्षितैःकल्पितैः ॥ १ ॥ मंदारमालाःआकलयतिसर्वतोधारयतीतितथोक्तया ॥ मंदारमालालकयेतिपाठःस्पष्टः ॥ लताकल्पितयालीलार्थयासुदोलयाविलसितं
मंदाकिन्याः ॥ ३ ॥ इंदुदलानांचंद्रकलानांस्यंदैर्निष्यंदरूपैश्चंद्रकलारब्धशरीरैरितियावत् ॥ लताजालनिलयेषुकुंजेषु ॥ ४ ॥

तौदंपतीतत्रविलासकांतीविवेशतुस्तासुवनस्थलीषु ॥ किंजल्कगौरानिलघूर्णितासुरक्तोद्विरेफाविवपद्मिनीषु ॥ ३० ॥ ॥इ०वा०
वा०दे०मोक्षोपायेषुस्थि०भार्गवोपाख्यानेनवसंगमोनामसप्तमःसर्गः ॥ ७ ॥ ॥ ५ ॥ ॥श्रीवसिष्ठउवाच॥ ॥इतिचित्तविला
सेनचिरमुत्प्रेक्षितैःप्रियैः ॥ प्रणयैर्भार्गवस्यासीत्तुष्टयेसुसमागमः ॥ १ ॥ मंदारमालाकलयाविबुधासवमत्तया ॥ तदातनतयासार्द्धंद्वि
तीयेनामलेंदुना ॥ २ ॥ विह्वतंमत्तहंसासुहेमपंकजिनीषुच ॥ तटीष्वमरवाहिन्याःसहचारणकिंनरैः ॥ ३ ॥ पीतमिंदुदलस्यंदैर्देवैःसहर
सायनम् ॥ पारिजातलताजालनिलयेषुविलासिना ॥४॥ चारुचैत्ररथोद्यानलतालोलासुदोलया ॥ चिरंविलसितंव्यग्रैःसहविद्याधरी
गणैः ॥ ५ ॥ नंदनोपवनाभोगोमंदरेणेववारिधिः ॥ भृशमालोड्यतांनीतःप्रमथैःसहशांभवैः ॥ ६ ॥ बालहेमलताजालजटालासुनदीषु
च ॥ भ्रांतमुन्मत्तनागेनमैरवीष्वद्रिनीष्विव ॥ ७ ॥ कैलासवनकुंजेषुतयासहविलासिना ॥ हरेंदुधवलाराज्यःक्षिपितागणगीतिभिः
॥ ८ ॥ गंधमादनशैलस्यविश्रम्योपरिसानुषु ॥ सातेनकनकांभोजरापादमभिमंडिता ॥ ९ ॥ लोकालोकतटांतेषुविचित्राश्चर्यहारिषु ॥
क्रीडितंकृतहासेनरामतेनतयासह ॥ १० ॥ मंदरांतरकच्छेषुसार्द्धंहरिणशावकैः ॥ अवसत्ससमाःषष्टिंकल्पितामरमंदिरे ॥ ११ ॥ क्षीरा
र्णवतटीष्वस्यवनितासहचारिणः ॥ क्षीणंकृतयुगार्द्धंश्वेतद्वीपजनैःसह ॥ १२ ॥ गंधर्वनगरोद्यानलीलाविरचनैरसौ ॥ स्पष्टानंतजग
त्स्रष्टेःकालस्यानुकृतिंगतः ॥ १३ ॥ अथावसदसौशुक्रःपुरंदरपुरेपुनः ॥ सुखंचतुर्युगान्यष्टौहरिणेक्षणयासह ॥ १४ ॥ पुण्यक्षयानुसं
धानात्ततश्चावनिमंडले ॥ तयैवसहमानिन्यापपातोपहताकृतिः ॥ १५ ॥

क्रीडितम् ॥ ५ ॥ शांभवैःशिवानुचरैःप्रमथैःसहआलोड्यतांपरिभ्रां
ततास् ॥६॥ उन्मत्तनागेनमत्तगजेन ॥ मैरवीषुमेरुसंबंधिनीषुभूमिषु ॥७॥ हरस्येंदुनाचूडामणिनाकृष्णपक्षेपिधवलाः ॥ क्षिपिताःक्षिमाअतिवाहिताइतियावत् ॥ इट्छांदसः
॥ ८ ॥ सावधूः ॥ ९ ॥ लोकालोकोभूप्रांतपर्वतःप्रसिद्धः ॥ १० ॥ कच्छेषुजलप्रायशिशिरदेशेषु ॥ हरिणशावकैर्मृगपोतैः ॥ षष्टिसमाःसंवत्सरान् ॥ ११ ॥ १२ ॥ मनो

परालूनानिद्रवीभावेनविच्छिन्नानिसमस्तांगानियस्य ॥ ह्रतेदैवैर्बलाद्गृहीतस्यंदनोविमानंनंदनंवनंवासोलंकाराद्युपभोगानदसीवनचरस्य ॥ प्रालेयतांहिमजलताम् ॥१९॥
॥ १६ ॥ शरीरंद्रवीभूतस्वरूपम् ॥ १७ ॥ चित्तकेलिंगशरीरेद्वे ॥ व्यसनेनदुःखेनआविलेअस्वच्छे ॥ १८ ॥ तत्रव्योम्निआविविशतुःप्रविष्टे ॥ सत्यांश्रुत्यादिप्रमाणनियं
दशार्णेषुदेशविशेषेषु ॥ शुक्रतांरेतस्ताम् ॥ २० ॥ मेरुगहनेइलावृतादिवर्षे ॥ २१ ॥ मृग्याइति ॥ अर्थात्साप्सराःशापान्मृगीसंपन्नेतिगम्यते ॥२२॥ सत्यांश्रुत्यादिप्रमाणनियं ॥ २५ ॥
त्रितामवस्थितिंतपोध्यानदानादिनिष्ठांजहौ ॥ २३ ॥ अहरत्अग्रसत् ॥ २४ ॥ मद्रेशोमद्रराजस्तस्यपुत्रत्वंप्राक्तनब्राह्मण्यापेक्षयानिकृष्टांक्षात्रयोनिमित्याशयः ॥ २५ ॥

परालूनसमस्तांगोह्रतस्यंदननंदनः ॥ चिंतापरवशोध्वस्तःसमितीवहतोभटः ॥ १६ ॥ पतितस्यावनौतस्यचिंतयासहदीर्घया ॥ शरी
रंशतधाजातंशिलापातीवनिर्झरः ॥ १७॥ संशीर्णयोर्देहकयोश्चित्तकेव्यसनाविले ॥ विचेरतुस्तयोर्व्योम्निनिर्नीडौविहगौयथा ॥ १८॥
तत्राविविशतुश्चांद्रंतेचित्तेरश्मिजालकम् ॥ प्रालेयतामुपेत्याशुशालितामथजग्मतुः ॥ १९ ॥ शालींस्तान्भुक्तवान्पक्वान्दशार्णेषुद्वि
जोत्तमः ॥ सशुक्रःशुक्रतामेत्यतद्भार्यातनयोभवत् ॥ २० ॥ ततोमुनीनांसंसर्गात्तपस्युग्रेव्यवस्थितः ॥ अवसन्मेरुगहनेमन्वंतरमनि
दितः ॥ २१ ॥ तत्रतस्यसमुत्पन्नोमृग्याःपुत्रोनराकृतिः ॥ तत्स्नेहेनपरंमोहंपुनरप्याययौक्षणात् ॥ २२ ॥ पुत्रस्यास्यधनंमेस्तुगुणाश्चायु
श्चशाश्वतम् ॥इत्यनारतचिंताभिर्जहौसत्यामवस्थितिम् ॥ २३॥धर्मचिंतापरिभ्रंशात्पुत्रार्थंभोगचिंतया॥क्षीणायुषंतमहरन्मृत्युःसर्प
इवानिलम् ॥ २४ ॥ भोगैकचिंतयासार्द्धंसमुत्क्रांतचेतनः ॥ प्राप्यमद्रेशपुत्रत्वमासीन्मद्रमहीपतिः ॥ २५॥ मद्रदेशेचिरंकृत्वाराज्यमु
त्सन्नशात्रवम्॥जरामभ्याजगामात्रहिमाशनिरिवांबुजम् ॥ २६॥मद्रराजतनुंचारुंतपोवासनयासह॥तत्याजतेनजातोसौतपस्वीता
पसात्मजः॥ २७॥ समंगायामहानद्यास्तटमासाद्यतापसः ॥ तपस्तेपेमहाबुद्धिःसरामविगतज्वरः ॥ २८ ॥ विविधजन्मदशांविविधा
शयःसमनुभूयशरीरपरंपराः ॥ सुखमतिष्ठदसौभृगुनंदनोवरनदीसुतटेदृढवृक्षवत् ॥ २९ ॥ ॥इ०वा०वा०दे०मो०स्थि०भार्गवो
पाख्यानेशुक्रविविधजन्मानुभवोनामाष्टमःसर्गः॥ ८॥ ॥ ७॥ ॥ ॥श्रीवसिष्ठउवाच॥ ॥इतिचिंतयतस्तस्यशुक्रस्यपितुरग्र
तः॥ जगामातितरांकालोबहुसंवत्सरात्मकः॥ १ ॥

अभ्याजगामप्राप ॥ २६ ॥ तपोवासनयावानप्रस्थधर्मसंचितयेत्यर्थाद्गम्यते ॥ २७॥ विगतज्वरःशांत्यादिनिरस्तरागादिसंतापः ॥२८॥ असौप्रागुक्तोभृगुनंदनःशुक्रोविविधा
शयोनानाविधवासनावासितःसंस्तत्तदनुसारिणींविविधजन्मदशांप्राप्यशरीरपरंपराःसम्यगनुभूयदैवाद्वैराग्यादिसाधनसंप्राप्यासुखंनिर्विक्षेपंयथास्यात्तथावरनद्याःसमंगायाः
सुतटेदृढवृक्षवच्छेदनभेदनादिविक्षेपसहस्रेप्यचंचलवृत्तिरतिष्ठदित्यर्थः ॥ २९ ॥ ॥इतिश्रीवासिष्ठम०ता०स्थि०अष्टमःसर्गः ॥ ८ ॥ ॥ ७ ॥ ॥इहशुक्रशरीरस्यभृगुसंनि
धिवर्त्तिनः ॥ मृतप्रायस्यपतनंशुष्कताचोपवर्ण्यते ॥ १ ॥ इतिउक्तप्रकारेणचिंतयतोमनोराज्यैःकल्पयतः ॥ पितुर्भृगोरग्रतः ॥ १ ॥

भोगकल्पनाभिर्भ्रांतम् ॥ जन्ममरणपरंपराकल्पनयोद्भ्रांतम् ॥
पवनातपाभ्यांजर्जरःशिथिलीकृतः ॥ २ ॥ तासुतासुस्वकल्पितस्वर्गगमनादिदशासु ॥ एणकोहरिणः ॥ ३ ॥ विदेहःशुकदेहनिरपेक्षः ॥ ५ ॥ चर्मशेषाबहिः ॥ अंतस्त्वस्थिशे
विश्रामविश्रांतिप्राप ॥ ४ ॥ मनःकल्पनामात्रत्वात्पेलवाम् ॥ सत्यताभ्रांत्याप्राक्तनदेहविस्मरणात्सुदृढाम् ॥ पा ॥ ६ ॥ सातनुरभिमानदुःखक्षयप्रयुक्तादानंदाद्धेतोःशरीररंध्रेषुवेणुरंध्रेष्विवप्रवहतःसंचरतोवातस्ययेवेणुध्वनिवत्सीत्कारास्तद्रूपयाकाकल्यासूक्ष्माव्यक्तमधुरध्वनिनादेहस्य
ईदृशीगतिरितितच्चेष्टाःप्रगायतीवेत्युत्प्रेक्षा ॥ ७ ॥ तामेवदेहदशामुत्प्रेक्षांतरैरपिवर्णयति ॥ मनोवराकमित्यादिना ॥ सातनुर्भवभूमिषुभोगाशालक्षणेअवटेशुष्कपल्लवेदृतिप्रा
गवर्णितप्रकारेणलुठितंमनोवराकंशुभ्राभ्रसितयादंतमालयाहसतीव ॥ ८ ॥ सातनुर्मुखमंडलरूपेअरण्येजरत्कूपसमूहरूपयानासानयनवक्त्रादिगर्त्तानांशोभयाअकृत्रिमंस्वा

अथकालेनमहतापवनातपजर्जरः ॥ कायस्तस्यपपातोर्व्यांछिन्नमूलइवद्रुमः ॥ २ ॥ मनस्तुचंचलाभोगंतासुतासुदशासुच ॥ बभ्रा मातिविचित्रासुवनराजिष्विवैणकः ॥ ३ ॥ भ्रांतमुद्भ्रांतमभितश्चक्रार्पितमिवाकुलम् ॥ मनस्तस्यविशश्रामसमंगासरितस्तटे ॥ ४ ॥ अनंतवृत्तांतघनांपेलवांसुदृढामपि ॥ तांसंस्मृतिदशांशुक्रोविदेहोनुभवन्स्थितः ॥ ५ ॥ मंदराचलसानुस्थासातनुस्तस्यधीमतः ॥ ताप प्रसरसंशुष्काचर्मशेषाबभूवह ॥ ६ ॥ शरीररंध्रप्रवहद्वातसीत्काररूपया ॥ चेष्टादुःखक्षयानंदात्काकल्येवप्रगायति ॥ ७ ॥ मनोवराक मवटेलुठितंभवभूमिषु ॥ हसतीवेतिशुभ्राभ्रसितयादंतमालया ॥ ८ ॥ दर्शयंतीजगच्छून्यंवपुरक्ष्णोरकृत्रिमम् ॥ मुखारण्यजरत्कूपरू पयागर्त्तशोभया ॥ ९ ॥ तापोपतप्तासंसिक्तावर्षाजलभरेणसा ॥ प्रागनुस्मरणोल्लासमिवबाष्पंविमुंचति ॥ १० ॥ चंद्रानिलविलासेन लुलितावनभूमिषु ॥ धारानिकरपातेनविनुन्नाजलदागमे ॥ ११ ॥ प्रावृड्झिंझररूपेणप्लुतागिरिनदीतटे ॥ पांशुनापवनोत्थेनदुष्कृतेनेवरू पिता ॥ १२ ॥ शुष्ककाष्ठवदालोलावातेपुत्कृतखाकृतिः ॥ तारमारुतसीत्कारेवनेतपइवास्थिता ॥ १३ ॥ वक्राशुष्कांत्रतंत्रीचभूतभांका रकारिणी ॥ अरण्यलक्ष्मीर्वाल्येवशून्याचर्ममयोदरी ॥ १४ ॥ रागद्वेषविहीनत्वात्तस्यपुण्याश्रमस्यतु ॥ महातपस्त्वाच्चभृगोर्नभुक्तान्य गपक्षिभिः ॥ १५ ॥

भाविकंजगतःशून्यमसद्रूपतांविवेकिनांवपुरक्ष्णोःप्रत्यक्षंदर्शयंतीवस्थितेत्यर्थः ॥ वपुर्ग्रहणंतदाश्रितप्रमाणांतरोपलक्षणार्थम् ॥ ९ ॥ प्राक्तापोपतप्तापश्चात्संसिक्ता ॥ प्रागनुस्म रणंस्वबंधुभूतपूर्वपूर्वदेहपरंपरानुस्मरणंतत्प्रयुक्ताद्दुःखादानंदाद्वाउल्लसतीतिप्रागनुस्मरणोल्लासंबाष्पम् ॥ अश्रुधूमाभासयोःश्लेषादभेदारोपः ॥ १० ॥ ११ ॥ प्रावृड्निर्झरस्य रूपेणधातुरागेणप्लुतारंजिता ॥ १२ ॥ खाकृतिर्विलोडनोत्थखड्शब्दकरणम् ॥ अव्यक्तानुकरणाड्डाचिबहुलग्रहणान्नद्वित्वम् ॥ १३ ॥ भूतानांभांकारोभयंकरध्वनिस्तत्करण शीलाअरण्यलक्ष्मीःअलक्ष्मीः ॥ बाल्याबलिकर्मणाआहारेणेतियावत् ॥ ब्राह्मणादेराकृतिगणत्वात्कर्मणिष्यञ्ङीषू ॥ चर्ममयोदरीचर्ममात्रशेषोदरी ॥ १४ ॥ तद्धिंसानु

यमनियमाभ्यांकृशीकृताअंगयष्टिःस्वकल्पितशरारातरयन॥क्लीबेपिविभक्त्यलुक्छांदसः॥ भृगूद्वहस्यशुक्रस्यचेतः
॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेस्थितिप्रकरणेनवमःसर्गः ॥ ९ ॥ ॥ छ ॥ ॥ दृष्टपुत्रतनोःकोपोभृगोरत्रोपवर्ण्यते ॥ कालंप्रत्यथकालेनबोधनंचात्मविद्यया ॥ १ ॥ प
रमंपरमात्मानंसंबोधयतिस्फुटंदर्शयतीतिपरमसंबोधःसमाधिस्ततः ॥ १ ॥ गुणसेनायागुणसमूहस्यसामंतमधिष्ठातारम् ॥ २ ॥ कायलक्षणंकंकालंशवम् ॥ ३ ॥ कंकालमेव
वर्णयति ॥ तापेत्यादिना॥तापेनातपेनशुष्कवपुः ॥ राहुःसर्पशिराइतिवद्बहुव्रीहिः ॥ कृत्तिरंध्रेषुचर्मच्छिद्रेषुकृतनीडत्वात्स्फुरितास्तित्तिरयःपक्षिभेदायत्र ॥ संशुष्कांत्रायाउदरगु
हायाश्छायायांविश्रांतादर्दुराभेकायस्य ॥४॥ नेत्रगर्त्तकेसंसक्ताप्रसूताअपत्यपरंपराभिर्वृद्धानवकीटकायस्य ॥ पर्शुकानिपार्श्वास्थीनितल्लक्षणेपंजरेप्रोताःकोशकारकृमयःपू

यमनियमकृशीकृतांगयष्टिश्चरतितपःस्मभृगूद्वहस्यचेतः॥ तनुरथपवनापनीतरक्ताच्चिरमलुठन्महतीषुसाशिलासु ॥ १६ ॥ ॥इ०वा०
वा०दे०मो०स्थितिप्र०भार्ग०भार्गवकलेवरवर्णनंनामनवमःसर्गः॥ ९ ॥ ॥ छ ॥ ॥श्रीवसिष्ठउवाच॥ ॥अथवर्षसहस्रेण
दिव्येनपरमेश्वरः॥ भृगुःपरमसंबोधाद्विररामसमाधितः ॥ १ ॥ नापश्यदग्रेतनयंविनयावनताननम्॥ सामंतंगुणसेनायाःपुण्यमूर्त्त
मिवस्थितम्॥ २ ॥ अपश्यत्केवलंकायकंकालंपुरतोमहत्॥ देहयुक्तमिवाभाग्यंदारिद्र्यमिवमूर्त्तिमत्॥ ३ ॥ तापशुष्कवपुःकृत्तिरंध्रस्फु
रितितित्तिरि॥ संशुष्कांत्रोदरगुहाछायाविश्रांतदर्दुरम्॥ ४ ॥ नेत्रगर्त्तकसंसक्तप्रसूतनवकीटकम्॥ पर्शुकापंजरप्रोतकोशकारकृमिव्र
जम्॥ ५ ॥ प्राक्तनीमुपभोगेहामिष्टानिष्टफलप्रदाम्॥ धाराधौतांत्रयातद्वत्कृशंशुष्कास्थिमालया॥ ६ ॥ शिरोघटेनशुभ्रेणमसृणेनेंदु
वर्चसा॥ विडंबयच्चकर्पूराप्लुतलिंगशिरःश्रियम्॥ ७ ॥ ऋज्व्यासंशुष्कशिरयास्वास्थिमात्रावशेषया॥ ग्रीवयात्मानुसृतयादीर्घीकुर्व
दिवाकृतिम्॥ ८ ॥ मृणालिकापांडुरयाधारावभृतमांसया॥ नासाग्रास्थिकयावक्रेकृतसीमाकृतिंदधत्॥ ९ ॥ दीर्घकंधरयानूनसुन्न
तीकृतवक्रया॥ प्रेक्षमाणमिवप्राणानुत्क्रांतानंवरोदरे॥ १० ॥ जंघोरुजानुदोर्दंडैर्द्विगुणांदीर्घतांगतैः॥ प्रतिष्ठानमिवाशांतंदीर्घाध्व
श्रमभीतितः॥ ११ ॥ उदरेणातिरिक्तेनचर्मशेषेणशोषिणा॥ प्रदर्शयदिवाज्ञस्यहृदयस्यातिशून्यताम्॥ १२ ॥

वंदेशप्रसिद्धालूतावा ॥ ५ ॥ उपभोगेहांभोगवासनांशुष्कास्थिमालयाविडंबयदित्युत्तरेणान्वयः ॥ नानावैचित्र्यसंधिबंधैर्देहारंभकत्वेनचास्थ्नांवासनानांचसाम्यात् ॥ ६ ॥
त्वचोविशीर्णत्वेनास्थिमात्रशेषादिंदुवर्चसापूजाविशेषेकर्पूरैराप्लुतस्याभिषिक्तस्यशिवलिंगशिरसःश्रियंशोभांविडंबयत्अनुकुर्वत् ॥ ७ ॥ वासनाप्रसृतमात्मानमनुसृतयेव
॥ ८ ॥ वर्षधाराभिरवभृतमांसयाशीर्णमांसयानासाग्रास्थिकयावक्रेमुखमंडलेकृतःसीमामध्यावधारणशंकुर्यस्यतदाकृतिंदधत् ॥ नासास्थ्यग्रस्यमुखमंडलमध्यत्वादित्य
र्थः ॥ नासाग्रस्थितयेतिपाठेअस्थिकयेतिविशेष्यमध्याहार्यम् ॥ ९ ॥ दीर्घयाकंधरयाग्रीवया ॥ १० ॥ दंडशब्दस्यप्राण्यंगवचनत्वाभावान्नद्वंद्वैकवद्भावः ॥ जंघादिभिरष्ट
भिःआशांतंअष्टदिगंतंप्रतिप्रतिष्ठानंप्रतिष्ठमानंप्रस्थानंकुर्वाणमिवविश्लिष्यपलायनकाममिवेतियावत् ॥ मुगभावश्छांदसः ॥ दीर्घाध्वश्रमभीतितइतितत्रहेतूत्प्रेक्षा ॥ नहिदीर्घे
परलोकाध्वनिकायवहनश्रमःसोढुंशक्यतइतिभयादिवेत्यर्थः ॥ ११ ॥ १२ ॥

आलानंबंधनस्तंभम् ॥ १३ ॥ आलोकनमालोकस्तत्समकालंप्रतिभानंवक्ष्यमाणवितर्क.अभूदितिशेष. ॥ १४ ॥ भविष्यमवश्यभाव्यर्थमचिंतयतः ॥ तनयंमृतंदृष्ट्वेतिशेष· ॥ १५ ॥ १६ ॥ अकलितरूपःअरूपोपीतियावत् ॥ आकलितंकल्पितंरूपंयेनेतिवा ॥ १७ ॥ प्रतिपार्श्वंषड्भुजोद्वादशभासभुजइत्यर्थः ॥ षड्तुमुखः ॥ १८ ॥ १९ ॥ आशादिशः ॥ कानकै.कनकमयैः ॥ २०॥ परेणप्रबलेनश्वसनेनश्वासवायुनाअपास्तशिखराः ॥ २१ ॥ कल्पेप्रलयकालेदग्धस्यजगतोधूमेनपर्याकुलंमुखमिवविकृतम् ॥२२॥

प्रेक्ष्यतच्छुष्ककंकालमालानंदुःखदंतिनः ॥ पूर्वापरपरामर्शमकुर्वन्भृगुरुत्थितः ॥ १३ ॥ आलोकसमकालेहिप्रतिभानंततोभृगोः ॥ चिरमुत्क्रांतजीवःकिंमत्पुत्रोयमितिक्षणात् ॥ १४ ॥ अचिंतयतएवास्यभविष्यंतनयंततः ॥ कालंप्रतिबभूवाशुकोपःपरमदारुणः ॥ १५ ॥ अकालएवमत्पुत्रोनीतःकिमितिकोपितः ॥ कालायशापमुत्स्रष्टुंभगवानुपचक्रमे ॥ १६ ॥ अथाकलितरूपोसौकालःकवलितप्रजः ॥ आधिभौतिकमास्थायवपुर्मुनिमुपाययौ ॥ १७ ॥ खड्गपाशधरःश्रीमान्कुंडलीकवचान्वितः ॥ षड्भुजःषण्मुखोवह्न्यावृतःकिंकरसेनया ॥ १८ ॥ यच्छरीरसमुत्थेनज्वालाजालेनवल्गता ॥ फुल्लकिंशुकवृक्षस्यश्रियंनभः ॥ १९ ॥ यत्करस्थत्रिशूलाग्रनिःसृतैरग्निमंडलैः ॥ विरेजुरुदितैराशाःकानकैरिवकुंडलैः ॥ २० ॥ यत्परश्वसनापास्तशिखरामेदिनीभृतः ॥ दोलामिवसमारूढाश्चेलुःपेतुश्चघूर्णिताः ॥ २१ ॥ यत्खड्गमंडलोद्योतैःश्याममैवंविवस्वतः ॥ कल्पदग्धजगद्धूमपर्याकुलमिवाबभौ ॥ २२ ॥ सउपेत्यमहाबाहोकुपितंतंमहामुनिम् ॥ कल्पक्षुब्धाब्धिगंभीरंसांत्वपूर्वमुवाचह ॥ २३ ॥ विज्ञातलोकस्थितयोमुनेदृष्टपरावराः ॥ हेतुनापिनमुह्यंतिकिंनुहेतुंविनोत्तमाः ॥ २४ ॥ त्वमनंततपाविप्रोवयंनियतिपालकाः ॥ तेनसंपूज्यसेपूज्यःसाधोनेतरयेच्छया ॥ २५ ॥ मातपःक्षपयाबुद्धेकल्पकालमहानलैः ॥ योनदग्धोस्मिमेतस्यकिंत्वंशापेनधक्ष्यसि ॥ २६ ॥ संसारावलयोग्रस्तानिगीर्णारुद्रकोटयः ॥ भुक्तानिविष्णुवृंदानिकनशक्तावयंमुने ॥ २७ ॥

महाबाहोइतिरामस्यराज्ञोवासंबोधनम् ॥ २३ ॥ हेतुनापरापराधादिनिमित्तेनसतापि ॥ २४ ॥ इतरयाशापभयादिनिमित्तया ॥ २५ ॥ शापदानेप्रस्तुततत्रैवानिष्टंस्यान्नममेत्याशयेनाह ॥ मातपइति ॥ अबुद्धेव्यर्थबुद्धेइतिक्षेपच्छलेनज्ञानबाधितत्वादविद्यमानबुद्धेइतिप्रशंसा ॥ समानवाक्येयुष्मदस्मदादेशावक्तव्याइतिकात्यायनवचनविरोधाद्भिन्नवाक्यस्थपदात्परस्यमेइत्यादेशश्छांदसः ॥ २६ ॥ अप्रधृष्यतामुक्त्वास्वस्याव्याहतशक्तितामाह ॥ संसारेति ॥ संसारावलयोब्रह्मांडपंक्तयः ॥ कस्मिन्विषयेनशक्तास्तमुदाहरेत्यर्थः ॥ कनुशमाइतिपाठेनुककस्मिन्नपराधेकेनवाशापेनाभिभूताइत्यर्थः ॥ २७ ॥

स्वयंनियतिःस्वाभाविकीमर्यादा ॥ ईहितमिच्छाद्वेषादिनिमित्तांतरकृतमित्यर्थः ॥ २८ ॥ सृज्यतइतिसृष्टिस्तांजन्यभावमित्यर्थः ॥ अतका...
नत्तद्त्तुमध्रियतेतिश्रुतेरितिभावः ॥२९॥ कुतस्तवसर्वभोक्तृताकिंवास्वरूपंतत्राह ॥ इदमिति ॥ इहमूर्त्तामूर्त्तंजगत्परमात्मनोममइत्थंभोज्यस्वभावतयैवस्वस्मिन्कल्पितंरूपम्॥
यतःपरमात्मास्वात्मनिस्वयमेवजगदात्मनाविजृंभते ॥ अतःस्वयमेवोपसंहरतीत्यर्थः ॥३०॥ इदमप्यौपनिषद्व्यवहारदृशोक्तंपरमार्थदृशात्वाह ॥ नेहेति ॥ कर्मठदृष्ट्यात्वाह॥
वहवइति ॥ अनष्टकलंकयेतिच्छेदः ॥ ३१ ॥ सम्यग्दर्शनंतत्त्वसाक्षात्कारोयस्यतस्यतेकर्तृताकर्तृतेनस्तः ॥ ३२ ॥ नकर्तृत्वंनकर्माणिलोकस्यसृजतिप्रभुरित्यादिभगवद्दर्शि
ंपक्षमाश्रित्याह ॥ पुष्पाणीति ॥ हेतुनामभिःकर्त्रादिशब्दैः ॥ हेतुनाविधिरितिपाठेविधीयतइतिविधिःप्राणिकर्मैवस्वाक्षिप्तेनहेतुनानिमित्तवैचित्र्येणविचित्रकार्येपिकल्प्यतेस

भोक्तारोहिवयंब्रह्मन्भोजनंयुष्मदादयः ॥ स्वयंनियतिरेषाहिनावयोरेतदीहितम् ॥ २८ ॥ स्वयमूर्ध्वंप्रयात्यग्निःस्वयंयांतिपयांस्यधः ॥
भोक्तारंभोजनंयातिसृष्टिंचाप्यंतकःस्वयम् ॥२९॥ इदमित्थंमुनेरूपंममेहपरमात्मनः ॥ स्वात्मनिस्वयमेवात्मास्वतएवविजृंभते ॥३०॥
नेहकर्त्तानभोक्तास्तिदृष्ट्यानष्टकलंकया ॥ वहवश्चेहकर्त्तारोदृष्ट्याऽनष्टकलंकया ॥३१॥ कर्त्तृताकर्त्तृतेब्रह्मन्केवलंपरिकल्पिते ॥ असम्य
ग्दर्शनेनैवनसम्यग्दर्शनस्यते ॥ ३२ ॥ पुष्पाणितरुखंडेषुभूतानिभुवनेषुच ॥ स्वयमायांतियांतीहकल्पतेहेतुनामभिः ॥ ३३ ॥ अब्धिंबवि
तस्यचंद्रस्यचलनेकर्त्रकर्त्तृते ॥ नसत्येनानृतेयद्वत्तद्वत्कालस्यसृष्टिषु ॥ ३४ ॥ मनोमिथ्याभ्रमाभोगेकर्त्तृताकर्तृतामयीम् ॥ करोतिकल
नांरज्ज्वांभ्रांतेक्षणइवाहिताम् ॥ ३५ ॥ तेनमागामुनेकोपमापदामीदृशःक्रमः ॥ यद्यथातत्तथैवाशुसत्यमालोकयाकुलः ॥ ३६ ॥ नव
यंप्रतिभार्थेहानाभिमानवशीकृताः ॥ स्वतोहितातवशगाःकेवलंनियतौस्थिताः ॥३७॥ प्रकृतव्यवहारेहानियतीर्नियतेर्वशात् ॥ प्राज्ञाः
समभिवर्त्ततेनाभिमानमहातमः ॥ ३८ ॥ कर्त्तव्यमेवनियतंकेवलंकार्यकोविदैः ॥ सुषुप्तिवृत्तिमाश्रित्यकदाचित्त्वंननाशय ॥ ३९ ॥ क
साज्ञानमयीदृष्टिःक्वमहत्त्वंक्वधीरता ॥ मार्गेसर्वप्रसिद्धेपिकिमंधइवमुह्यसि ॥ ४० ॥

मर्थोभवतीत्यर्थः ॥ ३३ ॥ परमार्थदृशाअभावान्नसत्येव्यवहारसंवादान्नानृते ॥ कालस्यकालरूपस्यपरमात्मनः ॥ ३४ ॥ भ्रांतेक्षणोदुष्टदृष्टिः ॥ ३५ ॥ तेनवर्णितरीत्या
अपराधासंभवेन ॥ आकुलःसन्कोपमागाः ॥ ३६ ॥ रागाभिमानादिवशात्त्वत्पुत्रवधेअपराधितास्यान्नचमेतौस्तइत्याह ॥ नवयमिति ॥ प्रतिभार्थेभ्रांतिकल्पितख्यातिपूजा
द्यर्थेईहारागोयेषाम् ॥ अस्मदोर्द्वयोश्चेतिबहुवचनम् ॥ त्वत्समीपागमनमपिनत्वत्क्रोधभयात्किंतुतपस्विनोमान्याइतिनियतिवशादित्याशयेनाह ॥ स्वतइति ॥ ३७॥ सर्वप्राज्ञा
नुसारित्वान्नियतिवश्यताममोचितातवतुक्रोधाभिमानतमोनुवृत्तिरनुचितेत्याशयेनाह ॥ प्रकृतेति ॥ जगन्मर्यादापालकेश्वरेच्छालक्षणमहानियतेर्वशादवांतरप्रकृतव्यवहारे
च्छानियतीःसमनुवर्त्ततइत्यर्थः ॥ ३८ ॥ कार्यकोविदैर्व्यवहारचतुरैःकर्त्तव्यमेवअवश्यंकर्त्तव्यंनियतंस्वस्वोचितमर्यादापालनंत्वंसुषुप्तवृत्तितमोवृत्तिमाश्रित्यननाशय ॥ क
दाचिदप्रिनाशयाइतिपाठेस्पष्टम् ॥ ३९ ॥ सर्वप्राज्ञप्रसिद्धे ॥ ४० ॥

---

१ एतत्पाठपक्षेयोजनातुइहविषयेकर्त्रादिशब्दैःकालएवकल्पतेइतिकालपदाध्याहारेणबोध्या ॥

मुधाव्यर्थम् ॥ ४१ ॥ इत्थंभृगोर्मोहंविनियम्यप्रसुप्तज्ञानंप्रबोधयितुमुपक्रमते ॥ देहिनामित्यादिना ॥ तंप्रसिद्धंस्थूलम् ॥ ४२ ॥ आविनाशःईषन्निमित्तेनापिविनाशः ॥ नियतं आमोक्षस्थायि ॥ तुच्छंप्रातिभासिकम् ॥ कदर्थीक्रियतेक्रोधादिनापीड्यते ॥ ४३ ॥ स्नेहादभिमानात्किंचनईदृशमितिविशिष्यवक्तुमशक्यमंतर्व्यापारंकुर्वता ॥ ४४॥ अस देहांतरविषयःसंकल्पःक्रियते ॥ सत्पूर्वसिद्धंविनाश्यते ॥ पंकपुरुषआर्द्रमृत्पुत्रिकाक्रीडार्था ॥ ४५ ॥ असत्संकल्पनमेवकलनातद्रूपाद्धेतोर्बद्धम् ॥ ४६ ॥ तस्यदेहकलनात्र

स्वकर्मफलपाकोत्थामविचार्यदशांमुने ॥ किंमूर्खइवसर्वज्ञमुधामांशसुमिच्छसि ॥ ४१ ॥ देहिनामिहसर्वेषांशरीरंद्विविधंमुने ॥ किंन जानासितंदेहमेकमन्यन्मनोभिधम् ॥४२॥ तत्रदेहोजडोत्यर्थमाविनाशपरायणः॥ मनस्तुच्छंचनियतंकदर्थीक्रियतेतव ॥४३॥ चतुरे णयथासाधोरथःसारथिनोह्यते ॥ कुर्वताकिंचनस्नेहादेहोयंमनसातथा ॥ ४४ ॥ असत्संकल्पःक्रियतेसच्छरीरंविनाश्यते ॥ क्षणेनमन सापंकपुरुषःशिशुनायथा ॥ ४५ ॥ चित्तमेवेहपुरुषस्तत्कृतंकृतमुच्यते ॥ तद्बद्धंकलनाहेतोःकलनात्तंविमुच्यते ॥ ४६ ॥ अयंदेहइवात्र स्यमिदमंगमिदंशिरः ॥ इदंस्फारविकारंतन्मनएवाभिधीयते ॥ ४७॥ मनोहिजीवाज्जीवाख्यंनिश्चयैकतयानुधीः॥ अहंकारोभिमंतृ त्वान्नानातास्वयमेवहि ॥ ४८ ॥ देहवासनयाचेतस्त्वन्यानिस्वानिचेच्छया ॥ पार्थिवानिशरीराणित्यसंतिपरिपश्यति ॥ ४९ ॥ आलोक यतिचेत्सत्यंतदासत्यमयींमनः॥शरीरभावनांत्यक्त्वापरामायातिनिर्वृतिम् ॥५०॥तन्मनस्तवपुत्रस्यसमाधौत्वयिसंस्थिते॥स्वमनोरथ मार्गेणदूराद्दूरतरंगतम् ॥ ५१ ॥इममौशनसंत्यक्त्वादेहंमंदरकंदरे॥ प्रयातोवैबुधंसद्मनीडोड्डीनःखगोयथा ॥ ५२ ॥ तत्रमंदरकुंजेषुपा रिजाततलेषुच ॥ नंदनोद्यानखंडेषुलोकपालपुरेषुच ॥ ५३ ॥ मुनेचतुर्युगान्यष्टौविश्वाचींदेवसुंदरीम्॥ असेवतमहातेजाःषट्पदःपद्मि नीमिव ॥ ५४ ॥ तीव्रसंवेगसंपन्नस्वसंकल्पोपकल्पिते ॥ अथपुण्यक्षयेजातेनीहारइवशार्वरे ॥ ५५॥

कारमभिनयन्नाह ॥ अयमिति ॥ ४७ ॥ एकमेवमनोयथापूर्वपूर्वजीवाज्जीवांतराख्यंभवति ॥ तथाजीवटोपाख्यानेवक्ष्यते ॥ मनःसंकल्पितेर्थेनिश्चयैकतयामनएवतदनुधी र्भवति ॥ अभिमंतृत्वादहंकारइतिमनःस्वयमेवनानातानानात्वंभवतीत्यर्थः ॥ ४८ ॥ ४९ ॥ इदंचमनसोदेहादिकल्पकत्वमात्मसाक्षात्कारपर्यंतमेवनोत्तरत्रेत्याह ॥ आलोक यतीति ॥ ५० ॥ एवंभृगुंप्रबोध्यमनोविलासमात्रकृतांतत्पुत्रकथांप्रस्तौति ॥ तदिति ॥ ५१ ॥ इमंत्वयादृश्यमानम् ॥ ५२ ॥ ५३ ॥ देवसुंदरीमप्सरसम् ॥५४॥ स्वर्गइवपुण्य क्षयात्तत्पातोपिमनःकल्पनयैवेत्याशयेनाह ॥ तीव्रेति ॥ ५५ ॥

॥ ५७ ॥ तस्यतत्तद्वासनाक्रमानुसाराणपूर्वमुक्तान्यनुक्तानिचबहूनिजन्मान्या० ॥ आस॥ ८०॥
उत्तंसकुसुमम्लान्यादिकंस्वर्गेपुण्यक्षयचिह्नम् ॥ ५६ ॥ अजायतजन्मलेभे ॥ ५७ ॥ तस्यतत्तद्वासनाक्रमानुसाराणपूर्वमुक्तान्यनुक्तानिचबहूनिजन्मान्या० ॥ अथअनंतरंमुनेःसुतोजातः ॥ ५९ ॥ ६० ॥ नैतावं
दिना ॥ ५८ ॥ पौंड्रःपुंड्रदेशाधिपतिः ॥ देशिकोमंत्रसिद्धःअन्येषामुपदेष्टा ॥ अतएवमंत्रोपास्तिप्रभावात्कल्पंविद्याधरः ॥ अथअनंतरंमुनेःसुतोजातः ॥ त्रिगर्तेष्वित्यादिना॥ ६२॥
त्येवास्यजन्मानिकिंत्वन्यान्यप्यासन्नित्याह ॥ अन्यास्वपीति ॥ ६१॥ सामंतोमंडलेश्वरः ॥ तत्रकृतैःपापैस्तिर्यक्स्थावरादिजन्मान्यपिदर्शयति ॥

वैबुधंतत्परित्यज्यनभस्येवशरीरकम् ॥ भू
प्रम्लानकुसुमोत्तंसःखिन्नांगावयवोल्लसः ॥ सपपाततयासार्द्धंकालपंकफलंयथा ॥ ५६ ॥ धीवरोथमहाटव्यांहंसस्त्रिपथगातटे ॥ ५८ ॥
ताकाशमथासाद्यवसुधायांव्यजायत ॥ ५७ ॥ आसीद्विप्रोदशार्णेषुकोसलेषुमहीपतिः ॥ मद्रेष्वथमहीपालस्ततस्तापसबालकः ॥
सूर्यवंशेनृपःपौंड्रःसौरशाल्वेषुदेशिकः ॥ कल्पंविद्याधरःश्रीमान्धीमानथमुनेःसुतः ॥ ५९ ॥ विषमास्वेवपुत्रस्तेचचारांतरयोनिषु
वासुदेवइतिख्यातःसमंगायास्तटेस्थितः ॥ ६० ॥ अन्यास्वपिविचित्रासुवासनावशतःस्वयम् ॥ वंशगुल्मःकिरातेषुहरिणश्चीनजंगले ॥ स
॥ ६१ ॥ अभूद्विंध्यनगेभूयःकिरातःकैकटेषुच ॥ सौवीरेष्वथसामंतस्त्रिगर्तेषुचगर्दभः ॥ ६२ ॥ प्रजजापपुराविद्यांविद्याधरपुरप्रदाम् ॥ ६४ ॥ तेना
रीस्तपस्तालवृक्षेतमालेवनकुक्कुटः ॥ ६३ ॥ अयंसपुत्रोभवतोभूत्वामंत्रविदांवरः ॥ नायिकानलिनीभानुःपुष्पचापइवापरः ॥ विद्या
सावभवद्ब्रह्मन्व्योम्निविद्याधरोमहान् ॥ हारकुंडलकेयूरलीलानिचयलालकः ॥ ६५ ॥ जगामभस्मशेषत्वंशलभःपावकेयथा ॥ ६७ ॥
धरीणांदयितोगंधर्वपुरभूषणः ॥ ६६ ॥ सकल्पावधिमासाद्यद्वादशादित्यधामनि ॥ अथकालेनसंजातेविचित्रारंभकारिणि ॥
जगन्निर्माणरहितेस्फारेनभसिसाततः ॥ वासनातस्यबभ्रामनिर्नीडाविहगीयथा ॥ ६८ ॥ कृतेब्राह्मणतामेत्यजातोद्यवसुधातले ॥ ७० ॥
संसाररचनारंभेब्राह्मेरात्रिविपर्यये ॥ ६९ ॥ सामुनेवासनातस्यवातव्याचलितासती ॥ कल्पंविद्याधरोभूत्वानद्यास्त्वथमहामुने ॥
वासुदेवाभिधानोसौमुनेविप्रकुमारकः ॥ जातोमतिमतांमध्येसमधीताखिलश्रुतिः ॥ ७१ ॥ जगतिजठरयोनिषुप्रयातो
तपश्चरतितेपुत्रःसमंगायास्तटेस्थितः ॥ ७२ ॥ विविधविषयवासनानुवृत्त्याखदिरकरंजकरालकोटरासु ॥
गहनतरासुचकाननस्थलीषु ॥ ७३ ॥ ॥ इ० वा० वा० दे० मो० स्थि० भार्गवोपाख्यानेकालवचनंनामदशमःसर्गः ॥ १० ॥ ॥ ७३ ॥

॥ ६३ ॥ कल्पंविद्याधरोभवदितियदुक्तंप्राकृतत्तस्य निमित्तंप्रपंचयति॥अयंसइत्यादिना ॥ ६४ ॥ हारकेयूरादिभिर्लीलानिचयैश्चलालकोविलासयिताखीणाम् ॥ ६५ ॥ अतए
वसतासांप्रियतमइत्याशयेनाह॥नायिकेति ॥ ६६॥ द्वादशादित्यधामनिकल्पांतेयुगपदुदितद्वादशादित्यार्चिषिभस्मताम् ॥ ६७॥ ६८॥ ६९॥ कृतेआद्ययुगे ॥ ७०॥ ७१ ॥ ७२ ॥
उपसंहरति ॥ विविधेति ॥ खदिरकरंजकंटककरालगिरिकोटरकल्पासुजठरयोनिषुगर्भवासभेदेषुप्रयातोभ्रांतः ॥ ७३॥ ॥ इतिश्रीवा० तात्पर्यप्रकाशेस्थि० दशमःसर्गः ॥ १० ॥

१ शांबरेइतिक्वचित्पाठः ॥

भृगोर्योगदशासम्यक्पुत्रवृत्तांतदर्शनात् ॥ वर्ण्यतेकालसंवादान्मनःक्रीडाजगत्स्थितिः ॥ १ ॥ तरंगौघानांभांकारैर्मंद्रध्वनिभिःरणिताध्वनंतोऽनिलायत्र ॥ तरंगिण्याःसमंगाया तपस्तपतिकरोति ॥ १ ॥ २ ॥ तंपुत्रचरित्रात्मकंपुत्रमनोभ्रमम् ॥ विज्ञायतेअनेनेतिविज्ञानंयोगस्तन्नेत्रंसम्यगुन्मील्यउद्घाट्य ॥ ३ ॥ तनयेहितंपुत्रचरित्रम् ॥ ४ ॥ पुत्रस्योदंतं वृत्तांतम् ॥ योगजधर्मविशुद्धबुद्धिदर्पणेबिंबितमिवप्रत्यक्षम् ॥ ५ ॥ अत्रभृगुःस्वदेहान्निर्गत्यतेपुतेपुप्रदेशेपुसमंगातटांतेपुपुत्रवृत्तांतंक्रमेणदृष्ट्वापुनरागत्यस्वदेहंविवेशेतिनभ्रमि तव्यम् ॥ योगबलेनस्वस्थानएवसर्वदर्शनसंभवात् ॥ निर्गत्यभ्रमणेप्यतीतानागतदर्शनायोगात् ॥ तस्मात्समंगायास्तटादेत्यस्वतनुंविवेशेत्युक्तेस्तच्चितात्यागस्वशरीरप्रतिसंधान

कालउवाच ॥ ॥ अथोद्दामतरंगौघभांकाररणितानिले ॥ तीरएवतरंगिण्यास्तपस्तपतितेसुतः ॥ १ ॥ जटावानक्षवलयीजितसर्वेंद्रिय भ्रमः ॥ तत्रवर्षशतान्यष्टौसंस्थितस्तपसिस्थिरे ॥ २ ॥ यदीच्छसिमुनेद्रष्टुंतंस्वप्राभंमनोभ्रमम् ॥ तत्समुन्मील्यविज्ञाननेत्रमाशुविलोक य ॥ ३ ॥ ॥श्रीवसिष्ठउवाच ॥ ॥इत्युक्तेजगदीशेनकालेनसमदृष्टिना ॥ मुनिःसंचिंतयामासज्ञानाक्ष्णातनयेहितम् ॥ ४ ॥ ददर्शचमु हूर्त्तेनप्रतिभानवशादसौ ॥ पुत्रोदंतमशेषेणबुद्धिदर्पणबिंबितम् ॥ ५ ॥ पुनर्मंदरसानुस्थांस्वस्यांकालाग्रसंस्थिताम् ॥ समंगायास्तटा दत्यविवेशस्वतनुंभृगुः ॥ ६ ॥ विस्मयस्मेरयादृष्ट्याकालमालोक्यकांतया ॥ वीतरागमुवाचेदंवीतरागोमुनिर्वचः ॥ ७ ॥ भगवन्भूतभ व्येशबालावयमनुज्वलाः ॥ त्वादृशामेवधीर्देवत्रिकालामलदर्शनी ॥ ८ ॥ नानाकारविकाराढ्यासत्येवासत्यरूपिणी ॥ विभ्रमंजनय त्येषाधीरस्यापिजगत्स्थितिः ॥ ९ ॥ त्वमेवदेवजानासित्वदभ्यंतरवर्त्तियत् ॥ रूपमस्यामनोवृत्तेरिंद्रजालविधायकम् ॥ १० ॥ मत्पुत्र स्यास्यभगवन्मृत्युःकिलनविद्यते ॥ तेनेमंमृतमालोक्यजातःसंभ्रमवानहम् ॥ ११ ॥ अक्षीणाजीवितंपुत्रंकालोमेनीतवानिति ॥ निय तेर्वशतोदेवतुच्छापीच्छाममोदिता ॥ १२ ॥ ननुविज्ञातसंसारगतयोवयमापदाम् ॥ संपदांचैवगच्छामोहर्षामर्षवशंविभो ॥ १३ ॥ अयुक्तकारिणिक्रोधःप्रसादोयुक्तकारिणि ॥ कर्त्तव्यइतिरूढेयंसंसारेभगवन्स्थितिः ॥ १४ ॥

मात्रेतात्पर्यंबोध्यम् ॥ ६ ॥ वीतरागःअपगतपुत्रस्नेहः ॥ ७ ॥ बालाःअज्ञायतोऽनुज्वलारागादिमलिनचित्ताः ॥ ८ ॥ असत्यरूपिणीजगत्स्थितिःसत्येवपरमार्थरूपेवभासमा नासतिपरमार्थवस्तुन्येवविभ्रमंजनयतीतिवा ॥ धीरस्यविदुषोपि ॥ ९ ॥ विषयजगत्स्थितिरिवकरणीभूतंमनोरूपमपिमादृशांदुर्ज्ञेयमित्याह ॥ त्वमेवेति ॥ इंद्रजालसदृशमा

कियत्कालंसारूढातत्राह ॥ इदमिति ॥ यावत्कालंइदमवश्यंकर्त्तव्यमिदंनकर्तव्यमिताष्टानिष्टसाधनयोःकार्यफलंसत्यमितिजगद्भ्रमस्तावदेव ॥
तोनेत्याह ॥ तस्येति ॥ एततएतर्हितस्यभ्रमस्यतत्त्वबोधात्परित्यागोवृत्तः ॥ अतस्तदर्थंक्रोधप्रसादकर्त्तव्यतानियमोपिहेयएवेत्यनुचितएवंक्रोधइत्यर्थः ॥१५॥ एवंसत्यप्यपराधे
क्रोधेनयुक्तः असतितुतदारोपेणक्रोधेप्रत्युतक्रोद्धुरेवदंडोयुक्तइत्याशयेनाह ॥ केवलमिति ॥ चिंतांवर्णितरूपांनियतिपरिपालनमात्राभिप्रायम् ॥ बाध्यतांत्वदंडयतांयाताःस्मः
॥१६॥१७॥ हियस्मान्मनएवभौतिकंशरीरंकल्पयतिअतोमनएवद्वेशरीरेइत्यर्थः ॥ येनमनसा ॥१८॥ इत्थंविनीतवादेनस्वोपदिष्टसूक्ष्मार्थग्रहणेनचतोषितःकालस्तदुक्तिंप्रशंसं
स्तामेवोपपत्तिभिर्द्रढयति ॥ सम्यगुक्तमित्यादिना ॥ १९ ॥ २० ॥ मनसःअसन्निर्माणशक्तिःसर्वानुभवप्रसिद्धेत्याह ॥ तथाचेति ॥ २१ ॥ मनएवशरीरंहीत्युक्तेःसम्यक्त्वमुप

इदंकार्यमिदंनेतियावत्कार्यंजगद्भ्रमः ॥ तस्यैतत्संपरित्यागोहेयएवजगद्गुरो ॥ १५ ॥ केवलंतावकींचिंतामनालोक्ययदावयम् ॥ भगव
न्भवतेक्रुद्धायाताःस्मस्तेनबाध्यताम् ॥ १६ ॥ त्वयेदानीमहंदेवस्मारितस्तनयेहितम् ॥ समंगायास्तटेतेनदृष्टोयंतनयोमया ॥ १७ ॥ म
नोजगतिभूतानांद्वेशरीरेत्रसर्वगम् ॥ मनएवशरीरंहियेनेदंभाव्यतेजगत् ॥ १८ ॥ ॥ कालउवाच ॥ ॥ सम्यगुक्तंत्वयाब्रह्मन्शरीरंमन
एवच ॥ करोतिदेहंसंकल्पात्कुंभकारोघटंयथा ॥ १९ ॥ करोत्यकृतमाकारंकृतंनाशयतिक्षणात् ॥ संकल्पेनमनोमोहाद्बालोवेतालकंय
था ॥ २० ॥ तथाचसंभ्रमस्वप्नमिथ्याज्ञानादिभासुराः ॥ गंधर्वनगराकारादृष्टामनसिशक्तयः ॥ २१ ॥ स्थूलदृष्टिदशांत्वेतामवलंब्यमहामु
ने ॥ पुंसोमनःशरीरंचकायौद्वावितिकथ्यते ॥ २२ ॥ मनोमनननिर्माणमात्रमेतज्जगत्त्रयम् ॥ नसन्नासदिवस्फारमुदितंनेतरन्मुने ॥ २३ ॥
चित्तदेहांगलतयाभेदवासनयेद्धया ॥ द्विचंद्रत्वमिवाज्ञानान्नानातेयंसमुत्थिता ॥ २४ ॥ भेदवासनयापश्यत्पदार्थनिचयंमनः ॥ भिन्नंप
श्यतिसर्वत्रघटावटपटादिकम् ॥ २५ ॥ कृशोतिदुःखीमूढोहमेताश्चान्याश्चभावनाः ॥ भावयन्स्वविकल्पोत्थांयातिसंसारितांमनः ॥ २६ ॥
मननंकृत्रिमंरूपंभ्रमैतन्नयतोस्म्यहम् ॥ इतितत्त्यागतःशांतंचेतोब्रह्मसनातनम् ॥ २७ ॥ यथाप्रविततांभोधौद्रुतानैकतरंगिणि ॥ शाम्य
त्स्पंदतयानेककल्लोलावलिशालिनि ॥ २८ ॥

पाद्ययेनेदंभाव्यतेजगदित्युक्तेस्ततोपिसम्यक्त्वमित्युपपादयितुंपूर्वांनिंदति ॥ स्थूलदृष्टिदशामिति ॥ २२ ॥ कार्तार्हिसूक्ष्मदृष्टिस्तामाह ॥ मनइत्यादिना ॥ यतोमनइवसत्त्वास
त्वाभ्यामनिर्वचनीयमिदमुदितमित्यर्थः ॥ २३ ॥ चित्तदेहस्यअवयवभूतयालतयेवप्रतन्यमानया ॥ नानाताजगद्भिदा ॥ २४ ॥ २५॥ २६ ॥ संसरणक्रममुपपाद्यतन्निवृत्त्युं
पायमाह ॥ मननमिति ॥ कृत्रिममननरूपत्यागेअकृत्रिमस्वरूपावस्थितेरर्थप्राप्तत्वादितिभावः ॥ २७ ॥ उक्तेर्थेविस्तरेणसमुद्रतरंगदृष्टांतंवर्णयितुमारभते ॥ यथेत्यादिना ॥
अत्रत्ययथाशब्दस्यचतुर्दशश्लोकस्थेनतथैवेत्यनेनान्वयः ॥ वारिसामान्यात्मनाअंभोधिरूपेणतत्तत्प्रदेशेस्थितजलात्मनाचदृश्यमानदूरप्रस्थानरूपस्पंदाभावाच्छाम्यत्स्पंदत
यास्थिते ॥ कल्लोलग्रहणंमहत्त्वाद्गोबलीवर्दन्यायेन ॥ २८ ॥

॥२१॥स्वरूपंभावयनित्यादिःसर्वस्याकिंकोहंकारारोपवादः ॥ यदिभावयतितदावक्ष्यमाणभावनांकरोतीत्यर्थः ॥३०॥३१॥ तलातलंपातालंभावयन्पतनभयाद्धूलंतीरभूमिमुद्दिश्ययाति ॥ ३२ ॥ पलादल्पकालादूर्ध्वमनंतरउत्थितोभोगयोग्यंजन्मप्राप्तोस्मीतिभावितोऽभिमन्यमानोदेवाद्रिरिवप्ररत्नरश्मिजालसहितःसन्शोभतेभूपितोस्मीतिरव्यतीत्यर्थः ॥ ३३ ॥ तस्यान्यान्यपिहर्पभयस्थानानिदर्शयति ॥ तुपारकरेत्यादिना ॥ तुपारकरस्यचंद्रस्यविवनंबिवस्तत्रउपाधित्वेनस्थितःसन्शीतलोस्मीतिविवत्यभिमन्यते ॥ तटस्थाचलदावाग्निप्रतिविंबेनसहितस्तुज्वलद्वपुरस्मीतिविभेतिकंपतेचेतिपरेणान्वयः ॥३४॥ प्रतिविंविताःवेलाद्रितटयोःपक्षभायावनद्रुमायस्मिंस्तथाभूतःसन्महताराज्यप्राप्त्यादिफलारंभाडंबरेणसंयुक्तःकृतार्थोस्मीतिराजतेइतिपरेणान्वयः ॥ ३५ ॥ ३६ ॥ आत्तक्रंदआरब्धरोदनइवआरवीध्वनिमान् ॥ दृष्टांतेआरोपमुक्त्वाअपवादंदर्शयति ॥

वार्यात्मनिसमेस्वच्छेशुद्धेस्वादुनिशीतले॥ अविनाशिनिविस्तीर्णेमहामहिमनिस्फुटे॥ २९॥ ह्रस्वस्तरंगःस्वंरूपंभावयन्स्वस्वभावतः॥ ह्रस्वोस्मीतिविकल्पेनकरोतिस्वेनभावनाम्॥३०॥ दीर्घस्तरंगःस्वंरूपंभावयन्स्वस्वभावतः॥ दीर्घोस्मीतिविकल्पेनकरोतिस्वेनभावनाम्॥ ३१ ॥ ह्रस्वश्चैवपरिभ्रष्टरूपोस्मीतितलातलम्॥ भावयन्भूतलंयातिताद्दग्भावनयास्वया॥ ३२ ॥ उत्पन्नश्चपलादूर्ध्वमुत्थितोस्मीतिभावितः॥ सरश्मिरत्नजालस्तुशोभतेदीप्तयाश्रिया॥३३॥तुपारकरविंवस्थःशीतलोस्मीतिविंवति॥सतटाचलदावाग्निप्रतिविंबोज्ज्वलद्वपुः॥ ३४ ॥ विभेतिवतदग्धोस्मीत्याप्तमौनश्चकंपते॥ प्रतिविंवितवेलाद्रितटपक्षवनद्रुमः॥ ३५॥ महदारंभसंरंभसंयुक्तोस्मीतिराजते॥ विशङ्घोलानिलात्यंतध्वस्तलोलशरीरकः॥ ३६॥ खंडशःपरियातोस्मीत्यात्तक्रंदइवारवी ॥ नचोर्मयस्तेजलधेर्व्यतिरिक्ताःपयोभरात्॥ ३७॥ नचैकंरूपमेतेषांकिंचित्सन्नाप्यसन्मयम्॥ नचैतेह्रस्वदैर्घ्याद्यागुणास्तेषुनतेषुते॥ ३८ ॥ नोर्मयःसंस्थिताब्ध्यौनतत्तत्रनसंस्थिताः॥ केवलंस्वस्वभावस्यसंकल्पविकलीकृताः॥ ३९॥ नष्टानष्टाःपुनर्जाताजाताजाताःपुनःपुनः ॥ परस्परपरामर्शान्नान्यतामुपयांत्यलम्॥ ४० ॥एकरूपांवुसामान्यमयाएवनिरामयाः॥ तथैवास्मिन्प्रविततेसितेशुद्धेनिरामये॥ ४१ ॥ब्रह्ममात्रैकवपुषिब्रह्मणिस्फाररूपिणि॥ सर्वशक्तावनाद्यंतेपृथग्वदपृथक्कृताः॥ ४२॥ संस्थिताःशक्तयश्चित्राविचित्राचारचंचलाः ॥ नानाशक्तिर्हिनानात्वमेतिस्वेवपुषिस्थितिम्॥ ४३॥

नचेत्यादिना ॥ पयोभराद्वारिसमूहरूपाज्जलधेः ॥ ३७ ॥ तेपूर्मिषुगुणानसंतितेषुगुणेषुऊर्मयश्चनेतिदृष्टांतार्थः ॥ ३८ ॥ तत्राब्धौनसंस्थितादतियत्तन्न ॥ अधिष्ठानात्मनास्त्वाद्विवर्त्तात्मनातुप्रतियोग्यसिद्धावभावासिद्धेरितिभावः ॥ केतर्हितेऊर्मयस्तत्राह ॥ केवलमिति ॥ विकलीकृताअल्पीकृताःपरिच्छेदभेदविकल्पिनादतियावत् ॥ ३९ ॥ पर
[illegible] ॥ ४१ ॥ ब्रह्ममात्रैकवपुषि निरंकुशब्रह्मणैकस्वभावे अतएवब्रह्मणि ॥ पूर्णैवा [illegible]

यौक्तिकदृष्ट्योपपाद्यपरमार्थदृष्ट्याप्याह ॥ कल्पनेति ॥ ४५ ॥ ४६ ॥ अन्यपरित्यागोपायमाह ॥

व्यंगोनपुंसकः ॥ त्रिपदद्वंद्वेविभक्त्यलुक्छांदसः ॥ ४४ ॥ ननुजडाजडसाधारणीसत्ताकथंनियतैकरूपास्यादित्याशंक्यनचित्तकृतजडाजडविकल्पाभ्यांस न्मात्रैकरूप्यक्षतिरित्याशयेनाह ॥ जडेति ॥ चिन्मयेचिदाभासेचित्तंआयातिप्राप्तेसतितत्तद्धाममहंकारमेवात्मतयातदन्यसन्मात्रंचानात्मतयामन्यमानमनाध्यात्मिकंजडमा ध्यात्मिकंचाजडमितिभेदमुपादत्ते ॥ सेयंचित्तस्यभेदवासनारूपिणीशक्तिरधिष्ठानसन्मात्रातिरेकेमिथ्यात्वापत्तेरात्मनःस्वस्वरूपैवस्थितेतेनैकरस्यहानिरित्यर्थः ॥ ४८ ॥ एवं ॥ ४७ ॥ नानेति ॥ नियताकारासदासर्वत्रैकरूपानियतिःसत्ता ॥ त्र्युत्पादयति ॥

बृंहितंब्रह्मणिब्रह्मपयसीवोर्मिमंडलम् ॥ स्त्रीपुमान्व्यंगरूपेणब्रह्मैवपरिवर्त्तते ॥ ४४ ॥ कल्पनान्याजगन्नाम्नीनासीदस्तिभविष्यति ॥ ब्र ह्मणोजगतोभेदोमनागपिनविद्यते ॥ ४५ ॥ संपूर्णंखल्विदंब्रह्मजगद्ब्रह्मैवकेवलम् ॥ इतिभावययत्नेनह्यन्यत्सर्वंपरित्यज ॥ ४६ ॥ ना नारूपिण्येकरूपावैरूप्यशतकारिणी ॥ नियतिर्नियताकारापदार्थमधितिष्ठति ॥ ४७ ॥ जडाजडमुपादत्तेचित्तमायातिचिन्मये ॥ वास नारूपिणीशक्तिःस्वस्वरूपास्थितात्मनः ॥ ४८ ॥ ब्रह्मैवानघतेनेदंस्फाराकारंविजृंभते ॥ नानारूपैःप्रतिस्पंदैःपरिपूर्णइवार्णवः ॥ ४९ ॥ नानातांस्वयमादत्तेनानाकारविहारतः ॥ आत्मैवात्मन्यात्मनैवसमुद्रांभइवांभसि ॥ ५० ॥ व्यतिरिक्तानपयसोविचित्रावीचयोयथा ॥ व्यतिरिक्तानविश्वेशात्समग्राःकल्पनास्तथा ॥ ५१ ॥ शाखापुष्पलतापत्रफलकोरकयुक्तयः ॥ यथैकस्मिंस्तथाबीजेसर्वदासर्वशक्तिता ॥ ५२ ॥ विचित्रवर्णतायद्वद्दृश्यतेकठिनातपे ॥ विचित्रशक्तितातद्वद्देवेशेसदसन्मयी ॥ ५३ ॥ विचित्ररूपोदेतीयमविचित्रात्स्थितिःशि वात् ॥ एकवर्णात्पयोवाहाच्छक्रचापलतायथा ॥ ५४ ॥ अजडाज्जडतोदेतिजाड्यभावनहेतुका ॥ ऊर्णनाभाद्यथातंतुर्यथापुंसःसुषुप्त ता ॥ ५५ ॥ अचितश्चेतसःशक्तिस्वबंधायेच्छयाशिवः ॥ तनोतितांतवंकोशंकोशकारकृमिर्यथा ॥ ५६ ॥ स्वेच्छयात्मात्मनोब्रह्मन्भाव यित्वैषविस्मृतिम् ॥ करोतिकठिनंबंधंकोशकारकृमिर्यथा ॥ ५७ ॥ स्वेच्छयात्मात्मनोब्रह्मन्भावयित्वास्वकंवपुः ॥ संसारान्मोक्षमाप्नो तिस्वालानादिववारणः ॥ ५८ ॥

परिणामवाददृष्टांतेनोपपाद्यविवर्त्तवादप्रसिद्धदृष्टांतेनाप्यु पपादयति ॥ विचित्रेत्यादिना ॥ ५३ ॥ पयोवाहान्मेघात् ॥ ५४ ॥ चेतनादचेतनोत्पत्तावपिवादद्वयानुरूपेद्वेदृष्टांतेआह ॥ अजडादिति ॥ सुषुप्ततास्वापमरथादिः ॥ ५५ ॥ ननु चितऐकरूप्यात्तत्कार्येअचितिकथंवैचित्र्यसिद्धिरित्यतउक्तंचेतसःशक्तिमिति ॥ वासनावैचित्र्यमित्यर्थः ॥ ५६ ॥ ५७ ॥ स्वकंवपुःस्वीयंपूर्णस्वरूपंभावयित्वासाक्षादनुभूय ॥ ५८ ॥ चवर्णितदृष्टांतदार्ष्टांतिकसाम्यमव्याहतमित्याह ॥ ब्रह्मैवेत्यादिना ॥ ४९ ॥ ५० ॥ ५१ ॥ एकस्मिन्बीजे ॥ ५२ ॥

॥ ५९ ॥ भाविताचिरभावनयादृढीकृताशक्तिर्वासनाआत्मतांस्वानुरूपताम् ॥ अनंतमाकाशम् ॥ प्रावृण्मिहिकाप्रसिद्धा ॥ ६० ॥ उक्तमेवस्फुटयति ॥ याशक्तिरिति ॥ ६१ ॥ यतोस्यनित्यंपूर्णात्मरूपमनित्येन द्वयंबंधमोक्षकल्पनाअज्ञदृशातत्त्वदृशातुतत्तभावनैवनास्तीत्याह ॥ नेति ॥ ६२ ॥ तन्मयोबंधमोक्षविकारवानिवलक्ष्यतेभ्रांत्या ॥ कुतः ॥ आवियकेनवासनाध्यस्तभोक्तृभोग्यादिभावेनपस्तंतिरोहितम ॥ तदेवमायामयंजगदित्यर्थः ॥ ६३ ॥ तत्रमुख्यंबंधंदर्शयति ॥ यदैवेति ॥ ६४ ॥ अन्येबंधास्तुतत्कृताएवेत्याह ॥ अ

यथैवभावयत्यात्मासततंभवतिस्वयम् ॥ तथैवापूर्यतेशक्त्याशीघ्रमेवमहानपि ॥ ५९ ॥ भाविताशक्तिरात्मानमात्मतांनयतिक्षणात् ॥ अनंतमखिलंप्रावृड्मिहिकामहतीयथा ॥ ६० ॥ याशक्तिरुदिताशीघ्रंयातितन्मयतामजः ॥ यएवर्त्तुःस्थितिंयातस्तन्मयोभवतिद्रुमः ॥ ६१ ॥ नमोक्षोमोक्षईशस्यनबंधोबंधआत्मनः ॥ बंधमोक्षदृशौलोकेनजानेप्रोत्थितेकुतः ॥ ६२ ॥ नास्तिबंधोनमोक्षोस्तितन्मयस्त्वि वलक्ष्यते ॥ ग्रस्तंनित्यमनित्येनमायामयमहोजगत् ॥ ६३ ॥ यदैवचित्तंकलितंकिलानेनाकलात्मना ॥ कोशकारवदात्मायमनेनावलि तस्तदा ॥ ६४ ॥ अन्योन्यरूपास्त्वत्यंतंविकल्पितशरीरकाः ॥ मनःशक्तयएतस्मादिमानिर्यांतिकोटयः ॥ ६५ ॥ तज्जास्तस्याःपृथग्रूपाः समुद्रादिववीचयः ॥ तज्जास्तस्याःपृथक्स्याश्चचंद्रादिवमरीचयः ॥ ६६ ॥ अस्मिन्स्पंदमयेस्फारेपरमात्ममहांबुधौ ॥ चिज्जलेवित ताभोगेचिन्मात्ररसमालिनि ॥ ६७ ॥ काश्चित्स्थिराब्रह्मविष्णूकाश्चिद्रुद्रत्वमागताः ॥ काश्चित्पुरुषतांप्राप्ताःकाश्चिद्देवत्वमागताः ॥ ६८ ॥ (लहर्यःप्रस्फुरंत्येताःस्वभावोद्भावितात्मकाः ॥ काश्चिद्यममहेंद्रार्कवह्निवैश्रवणादिकाः ॥ १ ॥ ग्रंतिकुर्वंतितिष्ठंतिलहर्यश्चपलेपणाः ॥ का श्चित्किंनरगंधर्वविद्याधरसुरादिकाः ॥ २ ॥ उत्पतंतिपतंत्युग्रालहर्यःपरिवल्गिताः ॥ काश्चित्किंचित्स्थिराकारायथाकमलजादिकाः ॥ ३ ॥ काश्चिदुत्पन्नविध्वस्तायथासुरनरादिकाः ॥ ) कृमिकीटपतंगाहिगोमशाजगरादिकाः ॥ काश्चित्तस्मिन्महांभोधौस्फुरंत्येतेंबु बिंदुवत् ॥ ६९ ॥ काश्चिच्चलानरमृगगृध्रजंबुलकादिकाः ॥ स्फुरंतिगिरिकुंजेषुवेलावनतटेष्विव ॥ ७० ॥

न्योन्येति ॥ ६५ ॥ पृथगिवभूताः ॥ कर्मज्ञानेंद्रियभेदात्तामससात्विकभेदाद्वाविभागविवक्षयाक्रमादृष्टांतद्वयोपन्यासः ॥ ६६ ॥ मुख्यामुख्यबंधोपाधिकजीवाख्यसंविद्भेदा नेवनामरूपक्रियादिवैचित्र्यैर्विस्तरेणदर्शयितुमुपक्रमते ॥ अस्मिन्नित्यादिना ॥ ६७ ॥ पुरुषतांमनुष्यताम् ॥ ६८ ॥ मशामशकाः ॥ महांभोधौयादोरूपेणेतिशेषः ॥ दृष्टांतशेषो वा ॥ ६९ ॥ जंबुलकाजंबुकाः ॥ चंचुलकादितिपाठेपक्षिभेदाः ॥ वेलावनतटेष्विवचलाअस्थिराः ॥ तेषुहिवायुप्राबल्यात्तद्गततरुगुल्मलतादीनांचलताप्रसिद्धा ॥ ७० ॥

अतुच्छामहतीकलनादेहसंस्थानकल्पनायासांताः ॥ ७१ ॥ स्थैर्येणचिरस्थायित्वेन ॥ सुविकल्पैर्दृढविकल्पैर्हतामोहिताः ॥ शंकेतेसंभावयति ॥ ७२ ॥ इंदुरिवज्ञानामृतपूर्णत्वाच्छुद्धाःसत्यःपरमंपदंपूर्णस्वरू
धादर्शयति ॥ कृशइति ॥७३॥ पुरुषतांसदेहताम् ॥ अर्णवतांसुषुप्तिप्रलययोरिवानाविर्भूतवासनांमोहार्णवताम् ॥७४॥ इंदुरिवज्ञानामृतपूर्णत्वाच्छुद्धाःसत्यःपरमंपदंपूर्णस्वरू ॥ ७५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्य०
पावस्थितिलक्षणंमोक्षंव्रजंति ॥ लहर्यइवविलोलाश्चितःसंविदऔपाधिकसंवेदनभेदाःमननंमनस्तत्तादात्म्याध्यासात्तन्नामधेयाः ॥ ७५ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्य० ॥ १ ॥ तत्रादौसर्वजीवानांब्रह्मै
स्थिति०एकादशःसर्गः ॥ ११ ॥ ॥ ७ ॥ ॥ तरंगांबुधिदृष्टांतात्प्राणानामात्मविकारताम् ॥ वारयन्वक्तिमोहोत्थवैचित्र्यस्यविवर्त्तताम् ॥

संसारस्वप्नसंरंभेकाश्चित्स्थैर्ये
स्थिति०एकादशःसर्गः ॥ ११ ॥ ॥ ७ ॥ अतुच्छकलनाःकाश्चित्काश्चित्तुच्छशरीरकाः ॥ ७१ ॥ कृशोऽतिदुःखीमूढोह
सुदीर्घजीविताःकाश्चित्काश्चिदत्यल्पजीविताः ॥ अतुच्छकलनाःकाश्चित्काश्चित्तुच्छशरीरकाः ॥ ७१ ॥ संसारस्वप्नसंरंभेकाश्चित्स्थैर्ये
सुदीर्घजीविताःकाश्चित्काश्चिच्छंकंतेसुस्थिरंजगत् ॥ ७२ ॥ अल्पाल्पभावनाःकाश्चिद्दैन्यदोषवशीकृताः ॥ ७४ ॥ काश्चि
णभाविताः ॥ सुविकल्पहताःकाश्चिच्छंकंतेसुस्थिरंजगत् ॥ ७२ ॥ अल्पाल्पभावनाःकाश्चिद्दैन्यदोषवशीकृताः ॥ काश्चित्पुरुषतांप्राप्ताःकाश्चिदर्णवतांगताः ॥ ७४ ॥ काश्चि
णभाविताः ॥ सुविकल्पहताःकाश्चित्स्थावरतांयाताःकाश्चिद्देवत्वमागताः ॥ काश्चित्पुरुषतांप्राप्ताःकाश्चिदर्णवतांगताः ॥ ७४ ॥ काश्चि
मितिदुःखैर्वशीकृताः ॥ ७३ ॥ काश्चित्स्थावरतांयाताःकाश्चिद्देवत्वमागताः ॥ काश्चित्पुरुषतांप्राप्ताःकाश्चिदर्णवतांगताः ॥ लहरीविलोलाश्चित्संविदोहिमननापरनाम
मितिदुःखैर्वशीकृताः ॥ ७३ ॥ काश्चिद्व्रजंतिपरमंपदमिंदुशुद्धाः ॥ ब्रह्मार्णवात्समुदितालहरीविलोलाश्चित्संविदोहिमननापरनाम
त्स्थिताजगतिकल्पशतान्यनल्पाःकाश्चिद्व्रजंतिपरमंपदमिंदुशुद्धाः ॥ ब्रह्मार्णवात्समुदितालहरीविलोलाश्चित्संविदोहिमननापरनाम ॥ ११ ॥ ॥ ७ ॥ ॥ कालउ
त्स्थिताजगतिकल्पशतान्यनल्पाःकाश्चिद्व्रजंतिपरमंपदमिंदुशुद्धाः ॥ ब्रह्मार्णवात्समुदितालहरीविलोलाश्चित्संविदोहिमननापरनाम
वत्यः ॥ ७५ ॥ ॥ इ०वा०वा०दे०मो०स्थि०भार्गवोपाख्यानेसंसारप्रवृत्तिदर्शनंनामैकादशःसर्गः ॥ ११ ॥ ॥ ७ ॥ ॥ कालउ
वत्यः ॥ ७५ ॥ ॥ इ०वा०वा०दे०मो०स्थि०भार्गवोपाख्यानेसंसारप्रवृत्तिदर्शनंनामैकादशःसर्गः ॥ १ ॥ मिथ्याभावनयाब्रह्मन्स्वविकल्पक
वाच ॥ ॥ सुरासुरनराकाराइमायाःसंविदोमुने ॥ ब्रह्मार्णवादभिन्नास्ताःसत्यमेतन्मृषेतरत् ॥ १ ॥ मिथ्याभावनयाब्रह्मन्स्वविकल्पक
वाच ॥ ॥ सुरासुरनराकाराइमायाःसंविदोमुने ॥ ब्रह्मणोव्यतिरिक्तत्वंब्रह्मार्णवगताअपि ॥ भावयंत्योविमुह्यंतिभीमासुभवभूमि
लंकिताः ॥ नब्रह्मवयमित्यंतर्निश्चयेनत्वधोगताः ॥ २ ॥ ब्रह्मणोव्यतिरिक्तत्वंब्रह्मार्णवगताअपि ॥ भावयंत्योविमुह्यंतिभीमासुभवभूमि
लंकिताः ॥ नब्रह्मवयमित्यंतर्निश्चयेनत्वधोगताः ॥ कर्मणांबीजमप्यकर्मैवविद्धिताः ॥ ४ ॥ संकल्परूपयैवांतर्मुनेकलनयैत
षु ॥ ३ ॥ याएताःसंविदोब्राह्म्योमननैककलंकिताः ॥ एतत्तत्कर्मणांबीजमप्यकर्मैवविद्धिताः ॥ ४ ॥ संकल्परूपयैवांतर्मुनेकलनयैत
षु ॥ ३ ॥ याएताःसंविदोब्राह्म्योमननैककलंकिताः ॥ इमाजगतिविस्तीर्णाःशरीरोपलपंक्तयः ॥ तिष्ठंतिपरिवल्गंतिरुदंतिचहसंतिच
या ॥ कर्मजालकरंजानांबीजमुष्ट्याकरालया ॥ ५ ॥ इमाजगतिविस्तीर्णाःशरीरोपलपंक्तयः ॥ तिष्ठंतिपरिवल्गंतिरुदंतिचहसंतिच
या ॥ कर्मजालकरंजानांबीजमुष्ट्याकरालया ॥ ५ ॥ इमाजगतिविस्तीर्णाःशरीरोपलपंक्तयः ॥ ७ ॥ ताएताःकाश्चिदत्यच्छायथाहरिहरादयः ॥
॥ ६ ॥ आब्रह्मस्तंबपर्यंतंस्पंदनैःपवनोयथा ॥ उल्लसंतिनिलीयंतेम्लायंतिविहसंतिच ॥ ७ ॥ ताएताःकाश्चिदत्यच्छायथाहरिहरादयः ॥
काश्चिदल्पविमोहस्थायथोरगनरामराः ॥ ८ ॥
क्यंभेदकप्रपंचमिथ्यात्वंचोपपादयितुंप्रतिजानीते ॥ सुरासुरेति ॥ १ ॥ यद्यभिन्नास्तर्हिकुतस्तथानानुभवंतितत्राह ॥ मिथ्येति ॥ मिथ्याभावनाअनात्मन्यात्मताभ्रांतिस्तयाहे
क्यंभेदकप्रपंचमिथ्यात्वंचोपपादयितुंप्रतिजानीते ॥ सुरासुरेति ॥ १ ॥ यद्यभिन्नास्तर्हिकुतस्तथानानुभवंतितत्राह ॥ मिथ्येति ॥ मननंदेहात्मभावस्यपुनःपुनरनुसंधानंतदेवैतत्कर्मणांपुण्यपापप्रव
तुनेत्यर्थः ॥ अधोगताःनिकृष्टांदशांप्राप्ताः ॥ २ ॥ व्यतिरिक्तत्वंपरिच्छिन्नतांभावयंत्यःकल्पयंत्यः ॥ ३ ॥ मननंदेहात्मभावस्यपुनःपुनरनुसंधानंतदेवैतत्कर्मणांपुण्यपापप्रव
तुनेत्यर्थः ॥ अधोगताःनिकृष्टांदशांप्राप्ताः ॥ २ ॥ प्राणस्तेजसायुक्तःसहात्मनायथासंकल्पितंलोकंनयतीतिश्रुतेःकर्मबीजप्ररोहवैचित्र्यव्यवस्थायामपिसं
त्तीनाम् ॥ एवंभूताअपिताःसंविदःअकर्मनिष्क्रियंब्रह्मैवेतिविद्धि ॥ ४ ॥ प्राणस्तेजसायुक्तःसहात्मनायथासंकल्पितंलोकंनयतीतिश्रुतेःकर्मबीजप्ररोहवैचित्र्यव्यवस्थायामपिसं
त्तीनाम् ॥ एवंभूताअपिताःसंविदःअकर्मनिष्क्रियंब्रह्मैवेतिविद्धि ॥ इदानींतरंगस्थानीयांश्चित्संविच्छब्दितान्जीवानुपाधिवैशद्यतारतम्येनज्ञानभूमिकाभेदेनकर्मगतिवैचित्र्यप्रयुक्तसंसरण
कल्पोहेतुरित्याह ॥ संकल्परूपयेति ॥ ५ ॥ ६ ॥ ७ ॥ इदानींतरंगस्थानीयांश्चित्संविच्छब्दितान्जीवानुपाधिवैशद्यतारतम्येनज्ञानभूमिकाभेदेनकर्मगतिवैचित्र्यप्रयुक्तसंसरण
प्रकारभेदेनचविभज्योदाहरति ॥ ताएताइत्यादिना ॥ ज्ञानैश्वर्योत्कर्षावधित्वादत्यच्छाः ॥ ज्ञानाधिकारयोग्यताप्राप्तेरल्पविमोहस्थाः ॥ ८ ॥

इदानिष्टयोःप्रवृत्तिनिवृत्तिक्षमत्वात्कृमिकीटादेःस्थावरवन्नात्यंतमोहस्थतेतिभावः ॥ ९ ॥ ब्रह्ममहोदधेर्मुक्तेर्दूरेउपसंतेभवासंते ॥ शास्त्रप्रतिकूलप्रवृत्तिभिरित्यर्थः ॥ १० ॥
एवंसंसरणक्रमेणनरादिभावमुपागताःसंतस्तत्त्वंसंसरणश्रमविश्रांतिहेतुभूतयोगभूमिकासद्भावस्तन्मात्रम् ॥ तदमात्रमितिपाठेप्ययमेवार्थः ॥ समालोक्यशास्त्रतःश्रुत्वातदुन्मु
खाःजाताजाताअपिकृतांतोविप्रकारिदुरदृष्टंतल्लक्षणेनजरठाखुनानिखन्यंतेभूमिकादूषणेनपीड्यंतइतियावत् ॥ ११॥ अंतरंईपच्छेदकंविशुद्धज्ञानोपाधिम् ॥ कार्यैःसमंतत्तांब्र
ह्ममहांबुधितांजीवन्मुक्तिमितियावत् ॥ १२ ॥ नदृष्टापारभूमिर्यस्यतथाविधओघःपूर्णतायस्यतंसमाधिभिरवलंब्य ॥ १३ ॥ अधिकारिदेहप्राप्त्याप्रकाशेपिरागांधत्वात्ताम
स्यः ॥ १४ ॥ ऊर्ध्वान्उत्कृष्टजन्मनः ॥ अधःनिकृष्टपश्वादिजन्म ॥ १५॥ एवमनर्थसहस्रनिदानंजीवभावंप्रपंच्यतन्मूलंस्मारयंस्तन्निवृत्त्युपायमाह ॥ बह्विति ॥ बहवःसुख

काश्चिदत्यंतमोहस्यायथातरुतृणादयः ॥ काश्चिदज्ञानसंमूढाःकृमिकीटत्वमागताः॥ ९॥ काश्चित्तृणवदुल्यंतेदूरेब्रह्ममहोदधेः॥ अप्रा
प्तभूमिकाएतायथोरगनगादयः ॥ १० ॥ सत्वमात्रंसमालोक्यकाश्चिदेवमुपागताः॥ जाताजातानिखन्यंतेकृतांतजरठाखुना ॥ ११ ॥
काश्चिदंतरमासाद्यब्रह्मतत्त्वमहांबुधेः॥ गतास्तत्तांसमंकार्यैर्हरिब्रह्महरादिकाः॥ १२॥ अल्पमोहात्मिकाःकाश्चित्तमेवब्रह्मवारिधिम्॥
अदृष्टपारभूम्यौघमवलंब्यव्यवस्थिताः॥ १३॥ काश्चिद्भोक्तव्यजन्मौघभुक्तजन्मौघकोटयः॥ वंध्याःप्रकाशतामस्यःसंस्थिताभूतजा
तयः॥ १४॥ काश्चिदूर्ध्वादधोयांतियथाहस्तान्महत्फलम्॥ ऊर्ध्वादूर्ध्वंतरंकाश्चिदधस्तात्काश्चिदप्यधः॥ १५॥ बहुसुखदुःखकराकरा
क्षयेयंपरमपदास्मरणात्समागतेह॥ परमपदावगमात्प्रयातिनाशंविहगपतिस्मरणाद्विषव्यथेव॥ १६॥ ॥इत्यार्षेवा॰वा॰दे॰मो॰
स्थि॰भार्गवोपाख्यानेसंसारोत्पत्तिविस्तारवर्णनंनामद्वादशःसर्गः॥ १२॥ ॥ ७॥ ॥कालउवाच॥ ॥एतासांभूतजातीनामू
र्मीणामिवसागरात् ॥ विविधानांविचित्राणांलतानामिवमाधवे ॥ १ ॥ भव्याजितमनोमोहादृष्टलोकपरावराः॥ जीवन्मुक्ताभ्रमंती
हयक्षगंधर्वकिंनराः॥ २॥ अन्येतुकाष्ठकुड्याभामूढाःस्थावरजंगमाः॥ अपरेक्षीणमोहास्तेकिंतेषांप्रविचार्यते॥ ३॥

दुःखकराणांजन्मनांआकराःखनीभूताःरागादयोयस्यांतथाविधाइयंजीवतापरमपदस्यस्वात्मतत्त्वस्यास्मरणादपर्यालोचनदोषात्समागता ॥ १६ ॥ ॥ इतिश्रीवासिष्ठम॰
तात्पर्यप्रकाशेस्थिति॰द्वादशःसर्गः ॥ १२ ॥ ॥ ७ ॥ ॥ उपवर्ण्यमनःशक्तीरथात्रभृगुकालयोः ॥ शुक्रस्यसंनिधौगंतुमुत्थानंप्रतिपाद्यते ॥ १ ॥ उक्तासुजीव
जातिषुजीवन्मुक्तानामेवकृतार्थतानान्येषामित्याह ॥ एतासामित्यादिना ॥ सागरात् आविर्भूतानामितिशेषः ॥ एतासांमध्येयेजितमनोमोहास्तेभवंतीतिभव्याःकृतार्थाइति
परेणान्वयः ॥ भव्यगेयप्रवचनीयेत्यादिनाकर्तरियत ॥ यक्षादिग्रहणंयोषावानमुदाहरणार्थंनतुपरिगणनाय ॥ मनुष्यादिष्वपिसंभवात् ॥ १ ॥ २ ॥ साधनचतुष्टयसंपन्नाअ

किमर्थंतर्हितेषांदेहधारणमितिचेत्शास्त्रप्रकल्पनेनाज्ञोद्धारार्थमेवेत्याशयेनाह ॥ लोकेइति ॥ ४ ॥ ज्ञानमुत्पद्यतेपुंसःक्षयात्पापस्यकर्मणइति
फलंनान्येष्वित्याशयेनाह ॥ संप्रबुद्धेति ॥ ५॥ शर्वर्याभवंशार्वरम् ॥ ६॥ नीहारइवेत्यावरणेवेतालइवेतिविक्षेपेदृष्टांतौ ॥ वल्गतिनृत्यति ॥७॥ देहानांतदात्मतापन्नजीवानाम्
॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ मनोवासनयाअनुसंधानमात्रेणापिक्षणाद्यत्क्रियतेतदस्माभिर्महतापियत्नेनचिरेणापिकर्त्तुंनशक्यतइतिनास्मात्स्वपराधसंभावनापीत्याशयेनाह ॥
स्वानुसंहितमिति ॥ १२ ॥ समननात्मकोनिष्पंदईषच्चलनमपिदुःखदः ॥ १३ ॥ शब्दसंग्रहःश्रवणंतत्कारिणानत्वर्थप्रदर्शकेनेत्यर्थः ॥ यामइत्यस्मदोद्धयोश्चेतिवाअनुचरसाहि

लोकेप्रबुध्यमानानांभूतानामात्मसिद्धये ॥ विहरंतीहशास्त्राणिकल्पितान्युदितात्मभिः ॥ ४ ॥ संप्रबुद्धाशयायेतुदुष्कृतानांपरिक्षये ॥
तेषांशास्त्रविचारेषुनिर्मलाधीःप्रवर्त्तते ॥ ५ ॥ विलीयतेमनोमोहःसच्छास्त्रप्रविचारणात् ॥ नभोविहरणाद्भानोःशार्वरंतिमिरंयथा ॥६॥
अक्षीयमाणंहिमनोमोहायैवनसिद्धये ॥ नीहारइवसंछाद्यवेतालइववल्गति ॥७॥ सर्वेषामेवदेहानांसुखदुःखार्थभाजनम् ॥ शरीरं
मनएवेहनतुमांसमयंमुने ॥८ ॥ योयंमांसास्थिसंघातोदृश्यतेपांचभौतिकः ॥ मनोविकल्पनंविद्धिनदेहःपरमार्थतः ॥ ९ ॥ मनःशरीरे
णतवपुत्रोयंकृतवान्मुने ॥ तदेवप्राप्तवानाशुवयंनात्रापराधिनः ॥ १० ॥ स्वयावासनयालोकोयद्यत्कर्मकरोतियः ॥ सतथैवतदाप्नोति
नेतरस्येहकर्त्तृता ॥ ११ ॥ स्वानुसंहितमंतर्यन्मनोवासनयास्वया ॥ कोनामभुवनेशोस्तितत्कर्त्तुंयस्यशक्तता ॥ १२ ॥ येसर्गानरकाभो
गायाजन्ममरणैषणाः ॥ स्वमनोमननेनेदंसनिष्पंदोपिदुःखदः ॥ १३ ॥ बहुनात्रकिमुक्तेनशब्दसंग्रहकारिणा ॥ उत्तिष्ठभगवन्यामोय
त्रतेतनयःस्थितः ॥ १४ ॥ सर्वंचित्तशरीरेणभुक्त्वाशुक्रःक्षणादिव ॥ अथेंदुरश्मिसंघट्टात्समंगातापसःस्थितः ॥१५॥ तत्प्राणपवनाश्चि
त्तान्मुक्तइंदंशुवत्फलम् ॥ अवश्यायतयाभूत्वावीर्यतेनांतरास्थितः ॥ १६ ॥ इत्युक्त्वाभगवान्कालोहसन्निवजगद्गतिम् ॥ हस्ताद्धस्तेन
जग्राहभृगुमिंदुमिवांशुमान् ॥ १७॥ अहोनुचित्रानियतेर्व्यवस्थेतिवदद्उच्चैः ॥ भगवान्भृगुस्तस्थावुदयाद्रेर्यथारविः ॥१८॥

त्याद्वाबहुवचनम् ॥ १४ ॥ सर्वंस्वर्गभोगंचित्तकल्पितशरीरेणभुक्त्वाअथआकाशादिक्रमेणभूमाववतीर्णइंदुरश्मिसंपर्कादोषधीःप्रविश्यान्नादिभावक्रमेणजन्मपरंपरांप्राप्यसं
प्रतिसमंगायांतापसोभूत्वास्थितइत्यर्थः ॥१५॥ इंदुरश्मिसंघट्टादितियदुक्तंतद्विशदयति ॥ तत्प्राणेति ॥ तस्यशुक्रस्यप्राणपवनश्चित्ताच्चेतनशक्तेर्मुक्तःसंमूर्छितःसन्अवश्यायत
यानीहारभावेनइंदंशुसंपर्कात्तद्द्रुत्वासस्यद्वारातत्फलंव्रीह्यादिभूत्वापुरुषंप्रविश्यवीर्यरेतोभूत्वाअंतरास्त्रीगर्भेस्थितइत्यर्थः ॥ १६ ॥ हस्तादितिल्यब्लोपेपंचमी ॥ हस्तंप्रसार्ये
त्यर्थः ॥ दृष्टांतपक्षेलक्षितलक्षणयाहस्तशब्देनकरशब्दवाच्यकिरणपरिग्रहः ॥ १७ ॥ नियतेर्दैवस्यकर्मणोवा ॥ १८ ॥

हइतिकिलेत्यर्थेनिपातः ॥ अंगेतिसंबोधने ॥ सतमालजालेमंदरेसमंयुगपत्समुत्थितौतेजोनिधीतौभृगुकालौसजलदेअंबरतलेतुल्योदयौसकल.पूर्णइंदुश्चसूर्यश्चताविवभातः
प्रकाशतइत्यर्थः ॥१९॥२०॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेस्थि०त्रयोदशःसर्गः ॥ १३ ॥ ॥ ॥ ७ ॥ ॥ गत्वाताभ्यांसमाधिस्थशुक्रस्यात्रप्रबोधनम् ॥ स्मारणंपूर्वव
त्तस्यागमनेच्छाचकीर्त्यते ॥ १ ॥ अवनौअवतीर्येतिशेषः ॥ १ ॥ नभश्चरान्देवगणान्पक्षिणश्च ॥ २ ॥ हरिणीनामिवमुग्धमुग्धैःअक्षिप्रेक्षितैःकटाक्षैःस्मारितान्युत्पलानियैः॥
सदृशदर्शनस्यस्मृतिहेतुत्वात्सादृश्यंगम्यते ॥ ३ ॥ अध्यासितान्याश्रितान्युत्तुंगशिलाशकलान्येवविष्टराणिआसनानियैः ॥ धृताकारान्स्वीकृतशरीरान्उत्साहानिवस्थितान्॥

तेजोनिधीहसममंगसमुत्थितौतौभातस्तदांबरतलेसतमालजाले ॥ तुल्योदयाविवनभस्यमलेविहर्तुमभ्युत्थितौसजलदौसकलेंदुसू
र्यौ॥१९॥ ॥श्रीवाल्मीकिरुवाच॥ ॥इत्युक्तवत्यथमुनौदिवसोजगामसायंतनायविधयेस्तमिनोजगाम॥स्नातुंसभाकृतनमस्क
रणाजगामस्नामाक्षयेरविकरैश्चसहाजगाम॥२०॥ ॥इत्यार्षेवा०वा०दे०मो०स्थितिप्र०भार्गवोपाख्यानेभृगुसमाश्वासनंनाम
त्रयोदशःसर्गः॥१३॥ ॥७॥ ॥दिवस ॥८॥ ॥श्रीवसिष्ठउवाच॥ ॥अथकालभृगूदेवौमंदराचलकंदरात्॥गंतुंप्रवृत्तावव
नौसमंगासरितस्तटम् ॥ १ ॥ तौशैलादवरोहंतौदृष्टवंतौमहाद्युती॥नवहेमलताजालकुंजसुप्तनभश्चरान्॥ २॥ वल्लीवलयदोलाभिः
क्रीडतोगगनांगणे ॥ हरिणीमुग्धमुग्धाक्षिप्रेक्षितस्मारितोत्पलान् ॥ ३॥ सिद्धानध्यासितोत्तुंगशिलाशकलविष्टरान्॥ धृताकारानि
वोत्साहान्हेलादृष्टजगत्त्रयान्॥ ४॥ कृताजस्रपतत्पुष्पधारासारनिमज्जनान्॥ तालोत्तालकृतोद्दस्तहस्तान्हस्तिघटापतीन्॥५॥ मदा
वलेपनिद्रालून्मदान्मूर्त्तानिवस्थितान्॥पुष्पकेसररक्तांगपवनारुणवालधीन् ॥ ६ ॥ चंचलांश्चमरांश्चारून्भूभृन्मंडलचामरान्॥ कृ
ताजस्रपतत्पुष्पधारासारनिमज्जनान् ॥७॥ किन्नरान्भूमखर्जूरान्शाखासरलतांगतान्॥ परस्परफलाघातक्ष्वेडावर्जितकीचकान्
॥८॥ धातुपाटलदुर्वक्त्रान्मर्कटान्नटनोत्कटान्॥ लतावितानसंछन्नसानूपवनमंदिरान्॥ ९॥

हेलयालीलयादृष्टंजगत्त्रयंयैः ॥ ४ ॥ तालवृक्षाइवोत्तालाःस्थूलदीर्घाःकराःशुंडादंडायेषांतान्हस्तिघटापतीन्गजयूथपान्तौदृष्टवंतौइतिसर्वत्रसंबध्यते ॥ ५ ॥ तानेवविशि
नष्टि ॥ मदेति ॥ पुष्पकेसरैःरक्तांगेनरंजितेनपवनेनपरागैःपूरणादरुणवालधीनितिदेहलीदीपन्यायेनपूर्वोत्तराभ्यांसंबध्यते ॥ ६ ॥ चमरान्मृगविशेषान् ॥ भूभृन्मंडलस्यपर्व
तराजसमूहस्यचामरानिवस्थितान् ॥ ७॥ किन्नरान्दृष्टवंताविति पूर्वत्रसंबंधः ॥ भूमखर्जूरान्खर्जूरोत्तमजातिभेदान् शाखापर्यंतंसरलतामृजुतांगतान् ॥ परस्परस्यखर्जूरफ
लैराघातास्ताडनानितल्लक्षणाभिःक्रीडाभिरावर्जिताःसफलीकृताअधःप्रह्वाःकीचकावेणवोयैस्तान्मर्कटान् ॥ ८ ॥ धातुगैरिकमिवपाटलानिदुर्वक्त्राणिविकृतमुखानियेषांता

सिद्धान्देवयोनिविशेषान् ॥ अमरनारीभिरप्सरोभिः रतिकालज्ञापनायमंदारकुसुमैराहतान् ॥अतएवधातुपाटलैर्निर्द्वारैरच्छिद्रैःपयोदपटैःसंवृतान् ॥१०॥ तटा[illegible]
अजनसंसर्गान्जनसंचारानर्हान् ॥ बौद्धप्रव्रजितदृष्टांतोवृथापतनयोग्यताविवक्षया ॥ सागरेकांतेउत्कतयासोत्कंठतयाहेतुनेवआत्तानिगृहीतानिमधुमासश्चैत्रस्तत्संबंधीनिप्र
साधनानिपुष्पपल्लवाद्यलंकारायाभिस्ताः ॥ उत्कटताचांतमधुमांसप्रसाधनाइतिपाठेनुसागरस्योत्कटतायैउपभोगमदायआचांतैरुपयुक्तैर्मधुमांसैःप्रसाधनंयासांताः ॥ ११ ॥

सिद्धानमरनारीभिर्मंदारकुसुमाहतान् ॥ धातुपाटलनिर्द्वारपयोदपटसंवृतान् ॥१०॥तटानजनसंसर्गान्बौद्धान्प्रव्रजितानिव ॥ सरितः
कुंदमंदारपिनद्धलहरीघटाः ॥ सागरोत्कतयेवात्तमधुमासप्रसाधनाः ॥ ११ ॥ पुष्पभारपिनद्धांगान्वृक्षान्पवनकंपितान् ॥ क्षीबानिव
मधुप्राशौघूर्णान्मधुकरेक्षणान् ॥ १२ ॥ शैलराजश्रियंस्फीतांपश्यंतौताविलस्ततः ॥ प्राप्तवंतौवसुमतींपुरपत्तनमंडिताम् ॥ १३ ॥ क्षणा
दवापतुस्तत्रपुष्पलोलतरंगिणीम् ॥ समंगांसरितंसाधूसर्वपुष्पमयीमिव ॥ १४ ॥ ददर्शाथतटेतस्मिन्कस्मिंश्चित्तनयंभृगुः ॥ देहांतरप
रावृत्तंभावमन्यमुपागतम् ॥ १५ ॥ शांतेंद्रियंसमाधिस्थमचंचलमनोमृगम् ॥ सुचिरादिवविश्रांतंसुचिरश्रमशांतये ॥ १६ ॥ चिंतयं
तमिवानंताश्चिरभुक्ताचिरोज्झिताः ॥ संसारसागरगतीर्हर्षशोकनिरंतराः ॥ १७ ॥ नूनंनिश्चलतांयातमतिभ्रमितचक्रवत् ॥ अनंतजग
दावर्तविवर्तातिशयादिव ॥ १८ ॥ एकांतसंस्थितंकांतंकांत्यैकाकिनमाश्रितम् ॥ उपशांतेहसंभ्रमचित्तसंभ्रमसंगमम् ॥ १९ ॥ निर्वि
कल्पसमाधिस्थंविरतंद्वंद्ववृत्तितः ॥ हसंतमखिलांलोकगतिंशीतलयाधिया ॥ २० ॥ विगताखिलवृत्तांतंविगताशेषभोक्तृतम् ॥ निरस्त
कल्पनाजालमालंबितमहापदम् ॥ २१ ॥ अनंतविश्रांतिततेपदेविश्रांतमात्मनि ॥ प्रतिबिंबमगृह्णंतंसितंमणिमिवास्थितम् ॥ २२ ॥ हे
योपादेयसंकल्पविकल्पाभ्यांसमुज्झितम् ॥ संप्रबुद्धमतिंधीरंददर्शतनयंभृगुः ॥ २३ ॥ तमालोक्यभृगोःपुत्रंकालोभृगुमुवाचह ॥ वाक्य
मब्धिध्वनिनिभंतवपुत्रस्त्वसाविति ॥ २४ ॥ विबुध्यतामितिगिरासमाधेर्विररामसः ॥ भार्गवोंभोदघोषेणशनैरिवशिखंडभृत् ॥ २५ ॥

॥ १२ ॥ १३ ॥ पुष्पलोलतरंगामितिबहुव्रीहिणैवमत्वर्थलाभेअतिशयनित्ययोगद्योतनार्थइनिप्रत्ययः ॥ तदेवस्पष्टीकर्त्तुमाह ॥ सर्वपुष्पमयीमिवेति ॥ १४ ॥ अन्यंभावंअशु
कताम् ॥ १५ ॥ सुचिरश्रमःअनादिसंसारश्रमस्तस्यशांतये ॥ १६ ॥ चिरंभुक्ताअचिरात्उज्झितास्त्यक्ताः ॥ १७ ॥ अतिभ्रमितचक्रवदितिदृष्टांतोरागोपरमक्रमेणचित्तंस्वयमेवविश्राम्यतीतिद्योतनाय ॥ १८ ॥ चक्रदृष्टांताभिप्रायमेवस्पष्टमाह ॥ उपशांतेहेति ॥ १९ ॥ द्वंद्ववृत्तितःशीतोष्णसुखदुःखादेः ॥ २० ॥ वृत्तांतानिप्रवृत्तयः ॥ भोक्तृतास्तत्फला
नि ॥ महापदंअपरिच्छिन्नात्मसुखम् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ शिखंडभृत्मयूरः ॥ २५ ॥

अंतेअंतिके ॥ समोदयौसंमुखोदितौनत्वसमोदितौ ॥ २६ ॥ विप्रौविप्रवेषौ ॥ २७ ॥ मिथःअन्योन्यंकृताःसमाचारास्तत्कालोचितगौरवाभिनंदनाद्याचारायैः ॥ २८ ॥ शां तजपःसमापितसमाधिः ॥ जपमानसेचेतिधात्वर्थदर्शनात् ॥ इदमर्द्धंपाठक्रमादार्थक्रमवलीयस्त्वात्कदंबलतिकापीठादित्यतःप्राग्योज्यम् ॥ २९ ॥ निर्वृतिसुखम् ॥ ३० ॥ ज्ञाने नउपासनेन ॥ विद्ययाब्रह्मविद्यया ॥ अतिशयोक्तिरियंप्रशंसार्था ॥ वांयुवयोः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ध्यानेनउन्मीलितंउद्घाटितंदिव्यंलोचनंयस्यसः ॥ ३५ ॥ विस्म

उन्मील्यनेत्रेसोपश्यदंतेकालभृगूप्रभू ॥ समोदयाविवायातौदेवौशशिदिवाकरौ ॥ २६ ॥ कदंबलतिकापीठादथोत्थायननामतौ ॥ समौ समागतौकांतौविप्रौहरिहराविव ॥ २७ ॥ मिथःकृतसमाचाराःशिलायांसमुपाविशन् ॥ मेरुपृष्ठेजगत्पूज्याब्रह्मविष्णुहराइव ॥ २८ ॥ अथशांतजपोरामससमंगातटेद्विजः ॥ तावुवाचवचःशांतमन्तस्यंदसुंदरम् ॥ २९ ॥ भवतोर्दर्शनेनाहमद्यनिर्वृतिमागतः ॥ सममाग तयोर्लोकेशीतलोष्णरुचोरिव ॥ ३० ॥ योनशास्त्रेणतपसानज्ञानेनापिविद्यया ॥ विनश्येमेमनोमोहःक्षीणोसौदर्शनेनवाम् ॥ ३१ ॥ न तथासुखयंत्यंतर्निर्मलामृतवृष्टयः ॥ यथाप्रहर्षयंत्येतामहतामेवदृष्टयः ॥ ३२ ॥ चरणाभ्यामिमंदेशंभवंतौभूरितेजसौ ॥ कौपवित्रितवं तौनःशशांकार्काविवांबरम् ॥ ३३ ॥ इत्युक्तवंतंप्रोवाचभृगुर्जन्मांतरात्मजम् ॥ स्मरात्मानंप्रबुद्धोसिनाज्ञोसीतिरघूद्वह ॥ ३४ ॥ प्रबो धितोसौभृगुणाजन्मांतरदशांनिजाम् ॥ मुहूर्त्तमात्रंसस्मारध्यानोन्मीलितलोचनः ॥ ३५ ॥ अथासौविस्मयात्स्मेरमुखोमुदितमानसः ॥ वितर्कमंथरांवाचमुवाचवदतांवरः ॥ ३६ ॥ जयत्यविदितारंभानियतिःपरमात्मनः ॥ यद्वशादिदमाभोगिजगच्चक्रंप्रवर्त्तते ॥ ३७ ॥ म मानंतान्यतीतानिजन्मान्यविदितान्यपि ॥ दशाफलान्यनंतानिकल्पांतकलितादिव ॥ ३८ ॥ दृष्टाःकठिनसंरंभाविभवोप्यर्जनभ्रमाः ॥ विल्हतंवीतशोकासुचिरंमेरुस्थलीपुच ॥ ३९ ॥ पीतमामोदिमंदारकेसरारुणितंपयः ॥ मंदाकिन्याःसकह्लारंतटोप्यमरभूभृतः ॥ ४० ॥ भ्रांतंमंदरकुंजेपुफुल्लहेमलतालिपु ॥ मेरोःकल्पतरुच्छायापुष्पसुंदरसानुपु ॥ ४१ ॥ नतदस्तिनयद्भुक्तंनतदस्तिनयत्कृतम् ॥ नतदस्तिनय दृष्टमिष्टानिष्टासुवृत्तिपु ॥ ४२ ॥ ज्ञातंज्ञातव्यमधुनादृष्टंद्रष्टव्यमक्षतम् ॥ विश्रांतोथचिरंश्रांतोगतोमेसकलोभ्रमः ॥ ४३ ॥

यादाश्चर्यदर्शनात् ॥ २६ ॥ नियतिःकर्मफलव्यवस्थाहेतुर्मायाशक्तिः ॥ ३७ ॥ दशाफलानिमरणमूर्छादिदुर्दशाफलानिदुःखमोहादीनि ॥ कल्पांतःप्रलयस्तेनकलितात्संपन्ना द्दर्पघातदाहादेरिव ॥ ३८ ॥ कठिनःसंरंभःक्रोधउद्योगश्चयेपुतेविभवोराजानोद्रव्यार्जनभ्रमाअपि ॥ ३९ ॥ पयोवारि ॥ ४० ॥ ४१ ॥ नतदस्तीति ॥ सर्वंकृतंभुक्तंदृष्टंचेत्य

॥ ४४ ॥ किंतेतयातन्वासमीहितंतत्राह ॥ नेति ॥ ४५ ॥ ननुनियतरचनांद्रष्टुंविहरतस्तवतत्राभिनिवेशात्पुनःपूर्ववद्दक्षरोमनारथानुगमनादि
ज्ञानबाधितानुवृत्तिमात्रत्वान्नपूर्ववदभिनिवेशप्रसक्तिरित्याह ॥ यदिति ॥ यद्यस्मात्कारणादहमेकभावबुद्ध्याएकएवात्माभावःपरमार्थसत्योनान्यदितिदृढनिश्चयेनयच्चरित्र
मतिसुभगमत्यंतशुभावहमार्यैरन्यैश्चजीवन्मुक्तैःसेवितंतदेवस्थिरंयथास्यात्तथाअनुयाम्यनुसरामिनपूर्ववन्मूढवृत्त्तंतत्तस्मात्तवममचअभिमतापूर्वदेहजीवनादिरूपामतिरलंस
गम्यस्तुनामनकाचित्तयाक्षतिः ॥ तयाप्रकृतंप्रारब्धशेषभोजकव्यवहारमाचरामिनमूढवदभिनिवेक्ष्यामीत्यर्थः ॥ ४६ ॥ ॥ इतिश्रीवासिष्ठम०तात्पर्यप्रकाशेस्थितिप्रकरणेच

उत्तिष्ठतातगच्छामःपश्यामोमंदरस्थिताम् ॥ तांतनुंतावदाशुष्कांशुष्कांवनलतामिव ॥ ४४ ॥ नसमीहितमस्तीहनासमीहितमस्तिमे ॥
नियतेरचनांद्रष्टुंकेवलंविहराम्यहम् ॥ ४५ ॥ यदतिसुभगमार्यसेवितंतत्स्थिरमनुयामियदेकभावबुद्ध्या ॥ तदलमभिमतामतिर्ममास्तु
प्रकृतमिमंव्यवहारमाचरामि ॥ ४६ ॥ ॥ इ०वा०वा०दे०मो०स्थि०भा०भार्गवजन्मांतरस्मरणवर्णनंनामचतुर्दशःसर्गः ॥ १४ ॥
श्रीवसिष्ठउवाच ॥ ॥ विचारयंतस्तत्त्वज्ञाइतितेजागतीर्गतीः ॥ समंगायास्तटात्तस्मात्प्रचेलुश्चंचलासवः ॥ १ ॥ क्रमादाकाशमाक्रम्य
निर्गत्यांबुदकोटरैः ॥ संप्रापुःसिद्धमार्गेणक्षणान्मंदरकंदरम् ॥ २ ॥ अधित्यकायांतस्याद्रेरार्द्रपर्णावगुंठिताम् ॥ ददर्शभार्गवःशुष्कांपूर्वज
न्मोद्भवांतनुम् ॥ ३ ॥ उवाचेदंचहेताततन्वीतनुरियंहिसा ॥ यात्वयासुखसंभोगैःपुरासमभिलालिता ॥ ४ ॥ इयंसामत्तनुर्यस्याःकर्पूरागु
रुचंदनैः ॥ अंगमंगीकृतस्नेहाधात्रीचिरमलेपयत् ॥ ५ ॥ इयंसामत्तनुर्यस्यामंदारकुसुमोत्करैः ॥ रचिताशीतलाशय्यामेरूपवनभूमिषु
॥ ६ ॥ इयंसामत्तनुर्मत्तदेवस्त्रीगणलालिता ॥ सरीसृपमुखक्षुण्णापश्यशेतेधरातले ॥ ७ ॥ चंदनोद्यानखंडेषुममतन्वाययानया ॥ चिरं
विलसितंसेयंशुष्ककंकालतांगता ॥ ८ ॥ सुरांगनांगसंसर्गादुत्तुंगानंगभंगया ॥ चेतोवृत्त्यारहितयातन्वाद्यममशुष्यते ॥ ९ ॥

तुर्दशःसर्गः ॥ १४ ॥ ॥ ७ ॥ ॥ अत्रतांतनुमालोक्यशुकस्यपरिदेवनम् ॥ तन्निमित्तविशेषोक्त्यास्वभावश्चोपदिश्यते ॥ १ ॥ इतिप्रागुक्तप्रकाराःजागतीःसांसा
रिकीर्गतीर्विचारयंतःसंतःसमंगातटाद्भृग्वाश्रमंप्रतिप्रचेलुःप्रचलिताः ॥ चंचलासवइत्यनेनप्राणक्रिययैवतेषांचलनोपचारोनत्वात्मनिक्रियास्तीतिद्योतनाय ॥ १ ॥ अंबुदकोट
रैर्मेघच्छिद्रैः ॥ २ ॥ अधित्यकायांऊर्ध्वभागभूमौ ॥ ३ ॥ इदंवक्ष्यमाणप्रकारंवाक्यम् ॥ तन्वीकृशा ॥ ४ ॥ सुखसंभोगैरितियदुक्तंतत्प्रपंचयति ॥ कर्पूरेत्यादिना ॥ ५ ॥ ६ ॥
सरीसृपमुखैःसर्पवृश्चिकप्रभृतिकीटैःक्षुण्णासंचूर्णिताछिद्रितेतियावत् ॥ ७ ॥ चंदनानांहरिचंदनानामुद्यानखंडेषुविलसितंक्रीडाभिःशोभितम ॥ नंदनेतिपाठेस्पष्टम् ॥ ८ ॥ उ
त्तुंगाअनंगभंगाःकामतरंगायस्यांतथाविधयाचेतोवृत्त्यारहितयात्यक्तया ॥ शुष्यते ॥ भावेलट् ॥ ९ ॥

इदानींदेहमेवसंबोध्यानुशोचति ॥ तेषुतेष्वित्यादिना ॥ तेषुतेषुविचित्रेषुअवकाशेषुदेवोद्यानादिप्रदेशेषु॥तासुतासुविचित्रासुबाल्ययौवनादिदशासु ॥ तथाप्रागनुभूतप्रकारास्त त्सौंदर्यालंकारगीतहास्यरतिविलासादिभावनासंबंधायस्यसतथाविधोभूत्वासंप्रतिकथंस्वस्थोसिकुतस्तन्नानुशोचसीत्यर्थः ॥ १० ॥ कंकालतांअस्थिमात्रावशेषताम् ॥ ॥ ११ ॥ १२ ॥ हारोमुक्तावली ॥ १३ ॥ द्रवत्कांचनंद्रुतसुवर्णमिवकांतेनभासुरेण ॥ लोभंकामभोगस्पृहाम् ॥ उह्यतेधार्यंते ॥ पश्येतिपुनःपितरंप्रत्युक्तिः ॥ १४ ॥ कुवक्रेण विकृतेनमुखेन ॥ १५ ॥ अंतःप्रविष्टत्वात्प्रकाशेनप्रकाशमानेनार्कांशुजालेनशोभते ॥ पश्यामीत्यस्यपश्यमृगोधावतीत्यद्येववाक्यार्थःकर्म ॥ १६ ॥ आत्मनःस्वस्यास्तुच्छ

तेषुतेषुविलासेषुतासुतासुदशासुच ॥ तथातद्भावनाबंधःकथंस्वस्थोसिदेहक ॥ १० ॥ हातनोशवनामासितापसंशोपमागता ॥ कंका लतांप्रयातासिमांभीपयसिदुर्भगे ॥ ११ ॥ देहेनाहंविलासेषुयेनैवमुदितोभवम् ॥ कंकालतामुपगतात्तस्मादेवबिभेम्यहम् ॥ १२ ॥ ता राजालसमाकारोयत्रहारोभवत्पुरा ॥ ममोरसिनिलीयंतेतत्रपश्यपिपीलिकाः ॥ १३ ॥ द्रवत्कांचनकांतेनलोभंनीतावरांगनाः ॥ येनम ह्युपातेनपश्यकंकालतोह्यते ॥ १४ ॥ पश्यमेविततास्येनतापसंशुष्ककृत्तिना ॥ मत्कंकालकुवक्रेणवित्रास्यंतेवनेमृगाः ॥ १५ ॥ पश्या मिसंशुष्कतयाशवोदरदरीमम ॥ प्रकाशार्कांशुजालेनविवेकेनेवशोभते ॥ १६ ॥ मत्तनुःपरिशुष्केयंस्थितोत्तानाचलोपले ॥ वैराग्यंन यतीवात्मतुच्छत्वेनांतरंसताम् ॥ १७ ॥ शब्दरूपरसस्पर्शगंधलोभाद्विमुक्तया ॥ निर्विकल्पसमाध्येवतद्‌तच्छुष्यतेगिरौ ॥ १८ ॥ मुक्ता चित्तपिशाचेननूनंसुखमिवास्थिता ॥ तनुर्दैवतभंगेभ्योनबिभेतिमनागपि ॥ १९ ॥ संशांतेचित्तवेतालेयामानंदकलांतनुः ॥ यातिता मपिराज्येनजागतेननगच्छति ॥ २० ॥ पश्यविश्रांतसंदेहंविगताशेषकौतुकम् ॥ निरस्तकलनाजालंसुखंशेतेकथंवने ॥ २१ ॥ चित्तम र्कटसंरंभसंक्षुब्धःकायपादपः ॥ तथावेगेनचलतियथामूलान्निकृंतति ॥ २२ ॥

त्वेनफल्गुत्वेनकुत्सितरूपताप्रदर्शनेनेतियावत् ॥ नयत्युपदिशतीव ॥ १७ ॥ गंधांतानांलोभादभिलापाद्विमुक्तयामत्तन्वातदेतावत्कालंमत्परोक्षमेतदिदानींमत्प्रत्यक्षंचनिर्वि कल्प.समाधिर्यस्यास्तयेवशुष्यतेतप्यते ॥ १८ ॥ सुखंस्वस्थम् ॥ दैवतोपपादितेभ्योभंगेभ्योविपद्भ्यः ॥ १९ ॥ आनंदस्यकलांचमत्कृतिम् ॥ जागतेनत्रैलोक्यसंबंधिनाराज्ये नापीत्यन्वयः ॥ २० ॥ २१ ॥ संरंभेणकामादिचापलेनसंक्षुब्धोनकेवलंविवेकसद्वासनादिशाखापल्लवादीन्येवस्वस्ययथाविशातयतितथाचलतिकिंतुआमूलाद्यथानिकृंतति [illegible] यतीत्यर्थः. ॥ २२ ॥

॥ १८ ॥ ... सहैश्चावग्रहवरथुंयुत्साप्रांतगजनाभिगमनादिलक्षणंनपश्यात॥ प्राक्कौतुकदर्शन...
...मानघनाविमुक्तःतन्नंघगजोनामभ्रमघहाराभिःसहैश्चावग्रहवरथुंयुत्साप्रांतगजनाभिगमनादिलक्षणंनपश्यात॥ ... नित्यर्थः ॥ नाट्यंपश्यतीतिपाठेतुयथा

...वयथाप्राग्बहिःकौतुकदर्शनेननंदतितथाद्यनेत्यर्थः ॥ अथवाअद्रौस्फटिकशिलासुप्रतिबिंबितंगजाभ्रहरीणांविग्रहंयुद्धंमूर्त्तिवाद्यनपश्यतीत्यर्थः ॥ नाट्यंपश्यतीतिपाठेतुयथा इवयथाप्राग्बहिःकौतुकदर्शनेननंदतितथाद्यनेत्यर्थः ॥ अथवाअद्रौस्फटिकशिलासुप्रतिबिंबितंगजाभ्रहरीणांविग्रहंयुद्धंमूर्त्तिवाद्यनपश्यतीत्यर्थः ॥ ... शरीराणियस्मिंस्तथाविधमात्मनटस्यनाट्यंपश्यतितथाममदेहोपिचित्तानर्थवि
परानंदेपरमात्मनिस्थितोजीवन्मुक्तःप्रथमंगजमिवस्थूलंअभ्रमिवसूक्ष्मंहरिमिवकारणंचविग्रहाःशरीराणियस्मिंस्तथाविधमात्मनटस्यनाट्यंपश्यतीत्यर्थः ॥ २३ ॥ सर्वेआशारूपायेज्व
मुक्तत्वादेवपृथक्स्थितेनमदात्मनाअस्मिन्नद्रौक्वचिद्गजाःक्वचिदभ्राणिक्वचिद्धरयःसहमर्कटादयइतिनानाविग्रहमात्मनटस्यनाट्यंपश्यतीत्यर्थः ॥ २३ ॥ सर्वेआशारूपायेज्व
रास्तन्निदानभूतोयोमोहस्तल्लक्षणायामिहिकायाअभ्रबीजस्यशरदागमभूतम् ॥ सर्वासामाशानांदिशांवासर्वास्वाशासुदिक्षुवाज्वरभूतायामोहमिहिकायाःशरदागमम् ॥ अ
चित्तत्वंमनोनाशंविना ॥ २४ ॥ सुखसंभोगाहैरण्यगर्भानंदांताविषयसुखभोगास्तेषांसीमांतंपरमावधिभूमानंदम् ॥ अपरिच्छिन्नब्रह्मसाक्षात्कारत्वान्महाधिया ॥ रागादिधी

चित्तानर्थविमुक्तोद्रौगजाभ्रहरिविग्रहम्॥ नाद्यपश्यतिमेदेहःपरानंदइवस्थितः ॥ २३ ॥ सर्वाशाज्वरसंमोहमिहिकाशरदागमम् ॥ अ
चित्तत्वंविनानान्यच्छ्रेयःपश्यामिजंतुषु॥ २४ ॥ तएवसुखसंभोगसीमांतंसमुपागताः ॥ महाधियाशांतधियोयेयाताविमनस्कताम्
॥२५॥ सर्वदुःखदशामुक्तांसंस्थितांविगतज्वराम्॥ दिष्ट्यापश्याम्यमननांवनेतनुमिमामहम् ॥ २६॥ ॥श्रीरामउवाच॥ ॥भगव
न्सर्वधर्मज्ञभार्गवेणतदाकिल॥ सुबहून्युपभुक्तानिशरीराणिपुनःपुनः॥ २७ ॥ भृगुणोत्पादितेकायेतत्तस्मिंस्तस्यकिंपुनः॥ महानति
शयोजातःपरिदेवनमेववा॥ २८ ॥ ॥श्रीवसिष्ठउवाच॥ ॥शुक्रस्यकलनारामयासौजीवदशांगता ॥ कर्मात्मिकासमुत्पन्नाभृगो
र्भार्गवरूपिणी॥ २९॥

कार्योपशमाच्छांतधियः ॥ २५ ॥ स्वदेहेजीवन्मुक्तदेहसाम्यंसंभाव्याभिनंदति ॥ सर्वेति ॥ दिष्ट्याभाग्योदयेन ॥ २६ ॥ रामस्यप्रश्नाशयःस्पष्टः ॥२७॥ तत्तेभ्यःशरीरेभ्यः ॥
तस्मिन्काये ॥ किंकस्माद्धेतोः ॥ महानूप्रवृद्धः ॥ अतिशयःस्नेहस्येतिशेषः ॥ २८ ॥ शुक्रस्यसांप्रतिकग्रहपदाधिकारोपभोगप्रयोजकप्राक्कल्पानुष्ठितसत्कर्मणामुत्क्रांतिकाले
एतत्कल्पभाविभृगूत्पाद्यशरीराकारेणपरिणतानांतादृशाकारवासनात्मनैवप्रलयेचिरमवस्थानादाकाशादिक्रमेणैतत्कल्पेभृगुशरीरोत्पत्तौअन्नद्वाराप्राणापानप्रवाहेणतद्धृदयंप्र
विश्यरेतोरूपपरिणामद्वाराचिराभ्यासदृढीकृतप्राक्तनकामकर्मवासनानुसारेणैवशुक्रदेहारंभात्तेनकतिपयकर्मभोगेपिभोक्तव्यप्रारब्धकर्मणांबहूनामवशिष्टत्वाच्छुक्रस्तस्मिन्स्ने
हातिशयोनदेहांतरेषु तद्भोग्यकर्मणामनवशेषादित्याशयेनोत्तरंवसिष्ठआह ॥ शुक्रस्येत्यादिना ॥ कलनाप्राक्तनोत्क्रांतिकालिकीभाविदेहाकारकलना ॥ भार्गवरूपिणीभृगू
त्पाद्यदेहाकारायाप्राक्कल्पेआसीदितिशेषः ॥ २९ ॥

शरीरं प्रथमत्वेन एतत्कल्पे

तनुःसंपन्नेतिपरेणान्वयः॥ केनक्रमेणतमाह ॥ इदंप्रथमत्वेनेत्यादिना ॥ परात्पदात्प्रलयकालपरिशिष्टान्मायाशबलेश्वरात्इदंप्रथमत्वेनएतत्कल्पे ... तिरोहिताअंतर्भाविता सती ॥३०॥ ...पत्यासिक्तोच्छूनबीजांतरंकुरशक्तिवदीषदाविर्भूयक्रमादाकाशादिपदंतत्तद्भूतसाम्यंप्राणवातेनवृष्टिद्वाराअन्नादिभावेनव्यावलिताअंतर्भाविता सती ॥३०॥ नाअन्नयासिनाअपानप्रवाहेण ॥ ३१ ॥ विहिताविधिवदनुष्ठिताब्राह्मणजन्मोचितागर्भाधानपुंसवनजातकर्मान्नप्राशनचौलोपनयनादयःसंस्का राःब्राह्मणःसकाशादुक्तरीत्यादंप्रथमंयथास्यात्तथायदायस्माद्धेतोरायाताअतः ॥ अकालेपंचम्या ह्यसंस्कृततयापहाधिकारोभोक्तुंशक्यतइतिभावः ॥ ३२ ॥ ब्रह्मणःसकाशादुक्तरीत्यादंप्रथमंयथास्यात्तथायदायस्माद्धेतोरायाताअतः ॥ नकदाचिद्व्यभिचर त्प्रत्ययः ॥ ३३ ॥ ज्ञानिनोपिनप्रारब्धमतिवर्त्ततइत्याशयेनाह ॥ वीतेति ॥ ३४ ॥ यावद्देहंयावज्जीवनंसदासर्वकालेक्रमोमर्यादानियमः ॥

प्राणापानप्रवाहेणप्रविश्यहृदयंभृगोः॥ क्रमे प्रथमत्वेनसमुपेत्यपरात्पदात्॥ भूताकाशपदंप्राप्यवातव्यावलितासती॥ ३०॥ णवी तामेत्यसंपन्नौशनसीतनुः॥३१॥ विहितब्राह्मसंस्कारातत्रसापितुरग्रगा॥ कालेनमहताप्राप्ताशुष्ककंकालरूपताम्॥३२॥ इदं प्रथममायातायदासौब्रह्मणस्तनुः॥ अतस्तांप्रतिशुक्रेणतदातत्परिदेवितम्॥३३॥ वीतरागोप्यनिच्छोपिसमंगाविप्ररूपवान्॥ सशु शोचतनुंशुक्रःस्वभावोह्येपदेहजः॥ ३४ ॥ ज्ञस्याज्ञस्यचदेहस्ययावद्देहमयंक्रमः॥ लोकवद्व्यवहारोयंसक्त्यासक्त्याथवासदा ॥ ३५॥ येपरिज्ञातगतयोयेचाज्ञाःपशुधर्मिणः॥ लोकसंव्यवहारेपुतेस्थितालोकजालवत्॥ ३६ ॥ व्यवहारेयथैवाज्ञस्तथैवाखिलपंडितः॥ वासनामात्रभेदोत्रकारणंबंधमोक्षदम्॥ ३७॥ यावच्छरीरंतावद्धिदुःखेदुःखंसुखेसुखम्॥ असंसक्तधियोधीरादर्शयंत्यप्रबुद्धवत् ॥ ३८॥ सुखेपुसुखितानित्यंदुःखितादुःखवृत्तिपु॥ महात्मानोहिदृश्यंतेदृश्यएवाप्रबुद्धवत्॥ ३९ ॥ सूर्यस्यप्रतिबिंबानिक्षुभ्यंतिनपुनः स्थिरम्॥ चलाचलतयातज्ज्ञोलोकवृत्तिपुतिष्ठति ॥ ४० ॥ अवस्थितइवस्वस्थःप्रतिबिंबेपुभास्करः॥ संत्यक्तलोककर्मापिबुद्धएवा प्रबुद्धधीः॥४१॥

तीत्यर्थः ॥ ज्ञस्यसक्त्याअज्ञस्यत्वसक्त्येतिविशेषइत्यर्थः ॥ ३५ ॥ अतएवेतरव्यवहारेष्वपितयोस्तुल्यतैवेत्याह ॥ येइति ॥ ३६ ॥ तर्हिद्वयोःसाम्येएकस्यबंधोऽपरस्यमोक्षइ तिविशेषःकुतस्तत्राह ॥ वासनेति ॥ ३७ ॥ दुःखेदुःखनिमित्तप्राप्तौ ॥ दर्शयंतिविडंबयंति ॥ ३८ ॥ दुःखवृत्तिपुदुःखनिमित्तेपुदुःखितादुःखिताइव ॥ दृश्येव्यवहारविषये एवाप्रबुद्धवद्वर्त्ततेस्वात्मतत्त्वेतुसुस्थिरानाज्ञवद्वर्त्ततइत्यर्थः ॥ ३९ ॥ एकस्यैकदैवस्थिरास्थिरवृत्तिविरोधवारणायदृष्टांतमाह ॥ सूर्यस्येति ॥ यथासूर्यस्यजलस्थानिप्रतिबिंब यद्यप्येवक्षुभ्यंतिसंचलंतिनतुनभस्थंस्थिरंबिंबवपुस्तद्वदित्यर्थः ॥ त्वर्थेपुनःशब्दः ॥ ४० ॥ यथाप्रतिबिंबेष्ववस्थितोभास्करःस्वस्थएवास्वस्थोभिन्नश्चलइवभवतितद्वद्बुद्धएव

